॥ श्रीः ॥

चौखम्बा सुरभारती ग्रन्थमाला
९१

# नैषधीयचरित-रहस्यम्

## ( प्रश्नोत्तरात्मकम् )

लेखकः—
**डॉ० रमाशङ्कर मिश्र**
आचार्य ( नव्यव्याकरण, साहित्य, वेदान्त )
एम. ए. ( संस्कृत ), विद्यावारिधि ( पी-एच. डी. ), वाचस्पति ( डी.लिट्. )
श्रीहरदेवदास नथमल वैरोलिया आदर्श संस्कृत महाविद्यालय,
टेढ़ीनीम, वाराणसी



चौखम्बा सुरभारती प्रकाशन
वाराणसी

# कतिपय परीक्षोपयोगी प्रश्नोत्तरात्मक-ग्रन्थ

साहित्यदर्पणालोकः ( प्रश्नोत्तरात्मकः ) । श्री रामजी लाल शर्मा १२–५०
काव्यप्रकाश-रहस्यम् ( प्रश्नोत्तरात्मकः ) । श्री रामजी लाल शर्मा १२–५०
चन्द्रालोक-रहस्यम् ( प्रश्नोत्तरात्मकः ) । मानवल्ली तथा वेताल १४–००
शिशुपालवध-रहस्यम् (प्रश्नोत्तरात्मकः) । १–४ सर्ग । अशोकचन्द्र गौड़ १२–५०
सांख्यकारिकादर्शः ( प्रश्नोत्तरात्मकः ) । श्री राजेन्द्रप्रसाद कोठयारी ६–५०
अलङ्कारशास्त्रस्येतिहासः ( प्रश्नोत्तरात्मकः ) । श्रीपरमेश्वरदीन पाण्डेय ६–००
नलचम्पू-रहस्यम् (प्रश्नोत्तरात्मकः) । १-५ उच्छ्वास । परमेश्वरदीनपाण्डेय १०–००
वेदान्तसार-प्रदीपः ( प्रश्नोत्तरात्मकः ) । श्री राजेन्द्रप्रसाद कोठयारी ६–००
मध्यसिद्धान्तकौमुदी-चन्द्रिका (प्रश्नोत्तरात्मकः) । विजयमित्र शास्त्री २५–००
मृच्छकटिक-सोपानम् ( प्रश्नोत्तरात्मकः ) । डॉ० नरेश झा १०–५०
वेणीसंहार-रहस्यम् ( प्रश्नोत्तरात्मकः ) । श्री परमेश्वरदीन पाण्डेय ८–००
नैषध-रहस्यम् ( प्रश्नोत्तरात्मकः ) । १–५ सर्ग । श्री रमाशंकर मिश्र १६–००
दशरूपक-रहस्यम् ( प्रश्नोत्तरात्मकः ) । श्री त्रिलोकनाथ द्विवेदी १२–५०
भट्टिकाव्य-दर्पणः ( प्रश्नोत्तरात्मकः ) । श्री प्रज्ञान भिक्षु । १–४ सर्ग १०–००
५–८ सर्ग १०–००
भट्टिकाव्यालोकः (प्रश्नोत्तरात्मकः) । रमाशंकर मिश्र । १४–१७ सर्ग १२–५०
१८–२२ सर्ग १२–५०
चन्द्रकला-नाटिकारहस्यम् ( प्रश्नोत्तरात्मकः ) । श्री परमेश्वरदीन पाण्डेय ५–००
संस्कृतसाहित्येतिहासः ( प्रश्नोत्तरात्मकः ) । श्री परमानन्द शास्त्री ९–००
रसगङ्गाधर-हृदयम् ( प्रश्नोत्तरात्मकः ) । श्री ज्ञानचन्द्र त्यागी १४–००
लघुसिद्धान्तकौमुदी-चन्द्रिका ( प्रश्नोत्तरात्मकः ) । विजयमित्र शास्त्री १५–००
कादम्बरी-कला-प्रकाशः ( प्रश्नोत्तरात्मकः ) । डॉ० नरेश झा १२–५०
लघुमञ्जूषारहस्यम् ( प्रश्नोत्तरात्मकः ) । स्वामी रामेश्वर पुरी ६–००
शाकुन्तलरहस्यम् ( प्रश्नोत्तरात्मकः ) श्री त्रिलोकीनाथ द्विवेदी १२–५०
मेघदूत-तत्त्वालोकः ( प्रश्नोत्तरात्मकः ) । डॉ० अशोकचन्द्र गौड़ शास्त्री ८–००
महाभाष्यनवाह्निकालोचनम् ( प्रश्नोत्तरात्मकः ) । विजयमित्र शास्त्री १२–५०
मुक्तावली-प्रकाशः ( न्यायसिद्धान्तमुक्तावली-प्रश्नोत्तरी ) ।
श्री राजेन्द्रप्रसाद कोठयारी १०–००
औचित्यविचारचर्चा-मञ्जरी ( प्रश्नोत्तरात्मकः ) । डॉ० नरेश झा ७–५०
वक्रोक्तिजीवितम् ( प्रश्नोत्तरात्मकः ) । डॉ० नरेश झा ६–००
विक्रमाङ्कदेवचरितम् ( प्रश्नोत्तरात्मकः ) । डॉ० अशोकचन्द्र गौड़ ५–००

॥ श्रीः ॥

चौखम्बा सुरभारती ग्रन्थमाला

९१



# नैषधीयचरित-रहस्यम्

( प्रश्नोत्तरी )

लेखक—

डॉ० रमाशंकर मिश्र



चौखम्बा सुरभारती प्रकाशन

वाराणसी

प्रकाशक—

चौखम्बा सुरभारती प्रकाशन

( भारतीय संस्कृति एवं साहित्य के प्रकाशक तथा वितरक )

के० ३७/११७, गोपालमन्दिर लेन

पो० बा० नं० ११२९, वाराणसी २२१००१

दूरभाष : ३३३४३१



पुनर्मुद्रित संस्करण 2001 ई.

मूल्य 35.00

अन्य प्राप्तिस्थान—

चौखम्बा संस्कृत प्रतिष्ठान

३८ यू. ए., जवाहरनगर, बंगलो रोड

दिल्ली ११०००७

दूरभाष : 3956391

*

प्रधान वितरक—

चौखम्बा विद्याभवन

चौक ( बनारस स्टेट बैंक भवन के पीछे )

पो० बा० नं० १०६९, वाराणसी २२१००१

दूरभाष : ३२०४०४

मुद्रक—

श्रीजी मुद्रणालय

वाराणसी

# विषय-सूची

## समालोचनात्मको भागः



## श्लोकव्याख्याभागः

### प्रथमः सर्गः

## तृतीयः सर्गः

## चतुर्थः सर्गः



## पञ्चमः सर्गः

# प्रश्नपत्रागत-प्रश्नोत्तर-खण्डम्

## श्रीसम्पूर्णानन्द-संस्कृत-विश्वविद्यालयः, वाराणसी

### १९८४

### शास्त्रिपरीक्षायाम्

#### कवर्गे साहित्यविषये

#### द्वितीयवर्षे पञ्चमपत्रम्

समयः—घण्टात्रयम् सम्पूर्णाङ्काः—७

१—सप्रसङ्गं वृत्ताऽलङ्कारादिकं प्रदर्श्य पञ्चैव पद्यानि व्याख्येयानि— ५

( क ) जगज्जयं तेन च कोशमक्षयं प्रणीतवाञ्शैशवशेषवानयम् ।
सखा रतीशस्य ऋतुर्यथा वनं वपुस्तथालिङ्गदथाऽस्य यौवनम् ॥

( ख ) न वासयोग्या वसुधेयमीदृशस्त्वमङ्ग ! यस्याः पतिरुज्झितस्थितिः ।
इति प्रहाय क्षितिमाश्रिता नभः खगास्तमाचुक्रुशुरारवैः खलु ॥

( ग ) मृगया न विगीयते नृपैरपि धर्मागममर्मपारगैः ।
स्मरसुन्दर ! मां यदत्यजस्तव धर्मः स दयोदयोज्ज्वलः ॥

( घ ) मुखपाणिपदाऽक्षिण पङ्कजै रचिताऽङ्गेष्वपरेषु चम्पकैः ।
स्वयमादित यत्र भीमजा स्मरपूजाकुसुमस्रजः श्रियम् ॥

( ङ ) धातुर्नियोगादिह नैषधीयं लीलासरः सेवितुमागतेषु ।
हैमेषु हंसेष्वहमेक एव भ्रमामि भूलोकविलोकनोत्कः ॥

( च ) त्वत्प्रापकात्त्रस्यति नैनसोऽपि त्वय्येव दास्येऽपि न लज्जते यत् ।
स्मरेण बाणैरतितक्ष्य तीक्ष्णैर्लूनः स्वभावोऽपि कियान्किमस्य ? ॥

( छ ) हृदयदत्तसरोरुहया तया क्व सदृगस्तु वियोगनिमग्नया ।
प्रियधनुः परिरभ्य हृदा रतिः किमनुमर्तुमशेत चितार्चिषि ? ॥

( ज ) अमृतदीधितिरेष विदर्भजे ! भजसि तापममुष्य किमंशुभिः ।
यदि भवन्ति मृताः सखि ! चन्द्रिकाः शशभृतः क्व तदा परितप्यते ?

( झ ) काऽनुजे मम निजे दनुजाऽरौ जाग्रति स्वशरणे रणचर्चा ?
यद्भुजाऽङ्कमुपधाय जयाऽङ्कं शर्मणा स्वपिमि वीतविशङ्कः ॥

२—कालिदास-श्रीहर्षयो रचनायां तारतम्यं सप्रमाणं प्रदर्शनीयम् ।

३—महाकाव्यलक्षणं विलिख्य तस्य नैषधीयचरिते सद्भावः प्रतिपाद्यः । १०

उत्तराणि

१—(क) द्रष्टव्यम्, पृ० २९ ।
(ख) ,, पृ० ८० ।
(ग) ,, पृ० ९२ ।
(घ) ,, पृ० १२५ ।
(ङ) ,, पृ० १३५ ।
(च) ,, पृ० १५५ ।
(छ) ,, पृ० १६१ ।
(ज) ,, पृ० १६५ ।
(झ) ,, पृ० १७० ।
२—द्रष्टव्यम्, पृ० ।
३—द्रष्टव्यम्, पृ० ६ ।

---

## शास्त्रिपरीक्षायाम् १९८५

### कवर्गे साहित्यविषये

### द्वितीयवर्षे —पञ्चमपत्रम्

समयः—घण्टात्रयम् सम्पूर्णाङ्काः ७०

१—यथेच्छं पञ्चैव पद्यानि सप्रसङ्गं व्याख्येयानि— ५०

(क) प्रयातुमस्माकमियं कियत्पदं धरा तदाम्भोधिरपि स्थलायताम् ।
इतीव वाहैर्निजवेगदर्पितैः पयोधिरोधक्षममुत्थितं रजः ॥

(ख) अवश्यभव्येष्वनवग्रहग्रहा यया दिशा धावति वेधसः स्पृहा ।
तृणेन वात्येव तयानुगम्यते जनस्य चित्तेन भृशावशात्मना ॥

(ग) अखिलं विदुषामनाविलं सुहृदा च स्वहृदा च पश्यताम् ।
सविधेऽपि न सूक्ष्मसाक्षिणी वदनालङ्कृतिमात्रमक्षिणी ॥

(घ) विततं वणिजापणेऽखिलं पणितं यत्र जनेन वीक्ष्यते ।
मुनिनेव मृकण्डुसूनुना जगतीवस्तु पुरोदरे हरेः ॥

( ङ ) दारिद्र्यदारिद्रविणौघवर्षैरमोघमेघव्रतमर्थिसार्थे ।
सन्तुष्टमिष्टानि तमिष्टदेवं नाथन्ति के नाम न लोकनाथम् ॥
( च ) विज्ञापनीया न गिरो मदर्थाः क्रुधा कदुष्णे हृदि नैषधस्य ।
पित्तेन दूने रसने सितापि तिक्तायते हंसकुलावतंस ॥
( छ ) उपचचार चिरं मृदुशीतलैर्जलजजालमृणालजलादिभिः ।
प्रियसखीनिवहः स तथा क्रमादियमवाप यथा लघु चेतनाम् ॥
( ज ) पार्थिवं हि निजमाजिषु वीरा दूरमूर्ध्वगमनस्य विरोधि ।
गौरवाद्वपुरपास्य भजन्ते मत्कृतामतिथिगौरवऋद्धिम् ॥
( झ ) मा धनानि कृपणः खलु जीवंस्तृष्णयार्पयतु जातु परस्मै ।
तत्र नैष कुरुते मम चित्रं यत्तु नार्पयति तानि मृतोऽपि ॥

२—नारदेन्द्रसंवादः संस्कृतेन चारुविलेख्यः । १०

३—नैषधीयचरितकर्तुर्जीवनं वैदुष्यं च विवेचनीयम् । १०

## उत्तराणि

| | | |
|---|---|---|
| १—( क ) | द्रष्टव्यम्, | पृ० ५५ । |
| ( ख ) | ,, | पृ० ७५ । |
| ( ग ) | ,, | पृ० १०९ । |
| ( घ ) | ,, | पृ० १२३ । |
| ( ङ ) | ,, | पृ० १३९ । |
| ( च ) | ,, | पृ० १५४ । |
| ( छ ) | ,, | पृ० १६५ । |
| ( ज ) | ,, | पृ० १६९ । |
| ( झ ) | ,, | पृ० १७३ । |
| २— | द्रष्टव्यम् | पृ० १५ । |
| ३— | द्रष्टव्यम् | पृ० १ । |

॥ श्रीः ॥

# नैषध-रहस्यम्

## ( प्रश्नोत्तरात्मकम् )

## समालोचनात्मको भागः

( १ ) प्रश्नः—नैषधीयचरितकर्तुर्जीविनं वैदुष्यञ्च विवेचनीयम् ।
( १९८५ ई० )

अथवा

नैषधीयचरिते रसच्छन्दोलङ्कारभावादिविवेचनपुरस्सरं श्रीहर्षस्य जीवनचरितमुपस्थाप्यताम् । ( १९७८ ई० )

उत्तरम्—नैषधीयचरितमहाकाव्यप्रणेता अमरवाणीसाहित्यसुधीशिरोरत्न-विश्वविदितयशा कविचक्रचूडामणिस्तार्किकजगदलङ्कारो लोकोत्तरप्रतिभापावनः श्रीहर्षो वैदुष्यातुलविभावितनिबन्धप्रणयननिपुणः शास्त्रीयस्य पाण्डित्यस्य कवित्वस्य चानुपम एव रत्नाकर आसीदित्यत्र नास्ति काचित् संशीतिः । कवि-वरेण्यस्यास्य जनकः श्रीहीरस्तथा जननी च मामल्लदेवी आस्ताम् । यथा काव्यकर्मण्यधिगतकवित्वप्रकर्षो श्रीहर्षः स्वस्य नैषधीयचरितमहाकाव्यस्य प्रत्येकसर्गस्यान्तिमश्लोकस्य पूर्वार्द्धे स्वयमात्मना निगदति—

श्रीहर्षः कविराजराजिमुकुटालङ्कारहीरः सुतं
श्रीहरिः सुषुवे जितेन्द्रियचयं मामल्लदेवी च यम् ।

केचन् विद्वांसः 'माम् + अल्लदेवी' इत्येवंरूपेण पदच्छेदं विधाय महाकवेः श्रीहर्षस्य मातुः नाम 'अल्लदेवी' इतीत्थमङ्गीकुर्वन्ति, परमन्येषां विदुषां मतं विद्यते यत् 'वातापि' इत्यस्यान्तिके 'मामल्लपुर' इत्यभिधानान्वितं नगरं विविधविद्याविभूषितस्य श्रीहर्षस्य जनन्याः निवासस्थानम्, तमाधारीकृत्य च तस्य मातुः नाम 'मामल्लदेवी' इत्यभवदिति ।

कविपुङ्गवस्यास्य जनकः श्रीहीरः काशिवासिनो गढवालवंश प्रसूतस्य श्री विजयचन्द्रस्य सभापण्डित आसीत् । जातुचित् केनापि विदुषा जितः श्रीहीरः

स्वमरणकाले निजजेतारं पण्डितं पराजेतुं आत्मनः तनयं श्रीहर्षं संप्रेरितवान्। तदाज्ञावशवर्ती श्रीहर्षः वर्षैकं यावत् गङ्गातटे चिन्तामणिमन्त्रजपं सविशेषं विधाय विशिष्टां प्रतिभां समवाप। अधिगतवैदुष्यप्रकर्षोऽसौ श्रीहर्षः सभाभवनं सम्प्रविश्य भूपतेः विजयचन्द्रस्य प्रशंसायामधस्ताल्लिखितं श्लोकं श्रावयामास—

गोविन्दनन्दनतया च वपुःश्रिया च
मास्मिन् नृपे कुरुत कामधियं तरुण्यः।
अस्त्रीकरोति जगतां विजये स्मरः स्त्री-
रस्त्री जनः पुनरनेन विधीयते स्त्री॥

एतत्कृतीनां कश्मीरदेशेषु महती प्रतिष्ठाऽऽसीत् 'काव्यप्रकाशकारः श्रीमम्मटोऽस्य मातुलो बभूव' इत्येवं रूपात्मिका प्रथितिरपि जगति प्रचलिता विद्यते। कान्यकुब्जाधीश्वरस्य जयचन्द्रस्य सभायां सभापण्डितरूपेण कविवरेण्यस्यास्य प्रभूतं सम्मानमासीदित्यधस्ताल्लिखितश्लोकेन ज्ञायते—

ताम्बूलद्वयमासनं च लभते यः कान्यकुब्जेश्वराद्
यः साक्षात्कुरुते समाधिषु परं ब्रह्मप्रमोदार्णवम्।
यत्काव्यं मधुवर्षि धर्षितपरास्तर्केषु यस्योक्तयः
श्रीश्रीहर्षकवेः कृतिः कृतिमुदे तस्याभ्युदीयादियम्॥ (२२।१५५)

जयचन्द्रपितुर्विजयचन्द्रस्य प्रशंसायामनेन लिखितो ग्रन्थः विजयप्रशस्तिनामा सम्प्राप्यते। जयचन्द्रो गढवालवंश्यो नृपः आसीत्। विजयचन्द्रजयचन्द्रौ सम्मेल्य ११५६ ईशवीयतः ११९३ ई० पर्यन्तं राज्यं चक्रतुः। एतावता श्रीहर्षस्य स्थितिकालोऽपि द्वादशशतकोत्तरार्द्धभागो सुधीभिः निश्चीयते।

**महाकवेः श्रीहर्षस्य पाण्डित्यम्**—चिन्तामणिचिन्तनाधिगतवैदुष्यप्रकर्षान्वितो महाकविः श्रीहर्षः प्रभूतं पाण्डित्यं स्वस्मिन् धत्ते। महाकवेरस्य या प्रतिभासीमन्तिनी दर्शनरहस्यानि सरलीकरोति सैव शृङ्गारधारामपि प्रवाहयति। यथा स्वयमेव निगदितं श्रीहर्षेण—

साहित्ये सुकुमारवस्तुनि दृढन्यायग्रहग्रन्थिले
तर्के वा मयि संविधातरि समं लीलायते भारती।
शय्या वाऽस्तु मृदूत्तरच्छदवती दर्भाङ्कुरैरास्तृता
भूमिर्वा हृदयङ्गमो यदि पतिस्तुल्या रतिर्योषिताम्॥

'यः साक्षात्कुरुते समाधिषु परं ब्रह्मप्रमोदार्णवम्' इत्यनेन विज्ञायते यद् कविपुङ्गवोऽयं यथैव दार्शनिककविस्तथैव योगीति। तार्किकवरेण्यो श्रीहर्षः

स्वीयस्य शास्त्रज्ञानस्य परिचयं प्रतिसर्गं प्रस्तुवन्नपि सप्तदशसर्गे नास्तिकास्तिक-सकलदर्शनप्रवीणत्वं व्याकरणनिष्णातत्वं च सडिण्डिमनादं सविशेषं समुद्घोषितवान् । वेदान्तविद्यानिष्णातः कविवरोऽयं नैयायिकानां वैशेषिकानाञ्चोपरि स्वकवितायामप्युपहसति स्म । निदर्शनार्थं यथा—

मुक्तये यः शिलात्वाय शास्त्रमूचे सचेतसाम् ।
गोतमं तमवेक्ष्यैव यथा वित्थ तथैव सः ॥
ध्वान्तस्य वामोरु विचारणायां वैशेषिकं चारुमतं मतं मे ।
औलूकमाहुः खलु दर्शनं तत् क्षमं तमस्तत्त्वनिरूपणाय ॥

सर्ववेदान्तमतेषु अद्वैततत्त्वप्रतिपादकं मतमेव साधु सर्वातिशायि चेति प्रतिपादयन् श्रीहर्षः स्वीये नैषधीयचरिते निगदति—

साप्तुं प्रयच्छति न पक्षचतुष्टये तां
तल्लाभशंसिनि न पञ्चमकोटिमात्रे ।
श्रद्धां दधे निषधराड्विमतौ मताना-
मद्वैततत्त्व इव सत्यतरेऽपि लोकः ॥ ( १३।२६ )

व्याकरणविद्यानिष्णातोऽयं कविवरेण्यः वैयाकरणानामुपरि चारुतया उपहसन् स्वीये नैषधकाव्ये कथयति—

भङ्क्तुं प्रभुर्व्याकरणस्य दर्पं पदप्रयोगाध्वनि लोक एषः ।
शशो यदस्यास्ति शशी ततोऽयमेवं मृगोऽस्यास्ति मृगीति नोक्तः ॥
( २२।८४ )

अन्यच्च—

उभयी प्रकृतिः कामे सज्जेदिति मुनेर्मतः ।
अपवर्गे तृतीयेति भणतः पाणिनेरपि ॥ ( १७।७० )

पाण्डित्यप्रकर्षान्वितोऽयं कविवरेण्यो महावैयाकरण आसीदित्यत्र नास्ति कश्चन् संशयावकाशः । विदुषां प्रीतये निदर्शनार्थमत्र द्वौ श्लोकौ समुद्ध्रियेते—

क्रियेत चेत्साधुविभक्ति चिन्ता व्यक्तिस्तदा सा प्रथमाभिधेया ।
या स्वौजसां साधयितुं विलासैस्तावत्क्षमा नामपदं बहु स्यात् ॥
( ३।२३ )

अस्मिन् श्लोके हंसमुखेन भूपतेः नलस्य वर्णनं कारयन् महाकविः 'अपदं न प्रयुञ्जीत' 'एकवचनमुत्सर्गतः करिष्यते' इति वैयाकरणसिद्धान्तावभिमुखं जनान् सङ्केतयति । अन्यच्च—

स्वं नैषधादेशमहो विधाय कार्यस्य हेतोरिति नानलः सन् ।
किं स्थानिवद्भावमधत्त दुष्टं तादृक्कृत व्याकरणः पुनः सः ॥ (१०।१३६)

अत्र महावैयाकरणः श्रीहर्षः शक्रादीनां नरपतेः नलस्य रूपं धारणं कृत्वा भैम्याः स्वयम्वरे आगमनस्य वर्णनं कुर्वन् 'स्थानिवदादेशोऽनल्विधौ' इति पाणिनीयसूत्राभिमुखं सङ्केतं विदधाति ।

नरपतिना नलेन विहिते सपर्याप्रसङ्गे यद्वर्णनं समुपलभ्यते, तदनुसारेण कविपुङ्गवोऽयं रामनामानुरागी परमवैष्णव इत्यपि सिद्ध्यति । निदर्शनार्थमत्र द्वित्राः श्लोकाः समुपस्थाप्यन्तेऽधस्तात्—

लीलयाऽपि तव नाम जना ये गृह्णते नरकनाशकरस्य ।
तेभ्य एव नरकैरुचिता भीस्तें तु बिभ्यतु कथं नरकेभ्यः ॥ (२१।९७)
अस्मदाद्यविषयेऽपि विशेषे रामनाम तव धाम गुणानाम् ।
आन्वबन्धि भवतैव तु कस्मादन्यथा ननु जनुस्त्रितयेऽपि ॥(२१।९०)
विश्वरूप ! कृतविश्व ! कियन्ते वैभवाद्भुतमणी हृदि कुर्वे ।
हेम नह्यति कियन्निजचीरे काञ्चनाद्रिमधिगत्य दरिद्रः ॥(२१।१०३)

महाकवेः श्रीहर्षस्य रसच्छन्दोऽलङ्कारभावादिविवेचनम्—महाकवेः श्रीहर्षस्य नैषधीयचरिते प्राधान्येन शृङ्गाररसस्य गौणतयाऽन्येषां रसानां वर्णनं समुपलभ्यते । शृङ्गाररसेऽपि विप्रलम्भशृङ्गार-सम्भोगशृङ्गारञ्चेति द्वितयं समानरूपेण राजते । पाञ्चाल्यादिरीतिष्वपि वैदर्भीरीतेः प्राधान्यमत्र द्योत्यते । एतद्विषये महाकविना श्रीहर्षेण स्वयमेव निगदितम्—

धन्यासि वैदर्भि ! गुणैरुदारैर्यया समाकृष्यत नैषधोऽपि ।
इतः स्तुतिः का खलु चन्द्रिकाया यदब्धिमप्युत्तरलीकरोति ॥
गुणानामास्थानीं नृपतिलक ! नारीति विदितां
रसस्फीतामन्तस्तव च तव वृत्ते च कवितुः ।
जवित्रीं वैदर्भीमधिकमधिकष्टं रचयितुं
परीरम्भक्रीडाचरणशरणामन्वहमहम् ॥ ( १४।८८ )

सकलशास्त्रपारदृश्वा कविवरोऽयं स्वकीयस्य नैषधीयचरितस्य संरचना उपजाति-वंशस्थ-वसन्ततिलका-वैतालीय-रथोद्धता-हरिणी-शार्दूलविक्रीडित-मन्दाक्रान्तास्रग्धराप्रभृत्येकोनविंशतिसंख्यकेषु वृत्तेषु समापादिता । अलङ्कारेषु 'श्लेष-अनुप्रास-अर्थान्तरन्यास-अतिशयोक्ति-उपमा-दृष्टान्त-निदर्शनादीनां भूयांसः

प्रयोगाः यत्र तत्र संदृश्यन्ते। उत्प्रेक्षाणामपि चमत्कारोऽस्य नितान्तहृद्यः। निदर्शनार्थं यथा—

यदस्य यात्रासु बलोद्धतं रजः स्फुरत्प्रतापानलधूममञ्जिम।
तदेव गत्वा पतितं सुधाम्बुधौ दधाति पङ्कीभवदङ्कतां विधौ॥

अन्यच्च—

हृतसारमिवेन्दुमण्डलं दमयन्तीवदनाय वेधसा।
कृतमध्यबिलं विलोक्य ते धृतगम्भीरखनीखनीलिम॥

महाकवेः श्रीहर्षस्य मनोवृत्तिः श्लेषे नितरां प्रायेण सर्वत्र रममाणा वीक्ष्यते परं त्रयोदशे सर्गे सा वृत्तिः पराकाष्ठां गता संदृश्यते। यथा—

देवः पतिर्विदुषि नैषधराजगत्या
निर्णीयते न किमु न व्रियते भवत्या।
नायं नलः खलु तवाति महानलाभो
यद्येनमुज्झसि वरः कतरः पुनस्ते॥

यमकस्य सातिशया सुषमा सुधीभिरत्रावलोकनीया—

अवलम्ब्य दिदृक्षयाम्बरे क्षणमाश्चर्यरसालसंगतम्।
स विलासवनेऽवनीभृतः फलमैक्षिष्ट रसालसंगतम्॥

अधःस्थिते श्लोके समासोक्तिश्रियं प्रेक्षन्ताम्—

नवा लता गन्धवहेन चुम्बिता करम्बिताङ्गी मकरन्दशीकरैः।
दृशा नृपेण स्मितशोभिकुड्मला दरादराभ्यां दरकम्पिनी पपे॥

शब्दप्रयोगे महाकविः श्रीहर्षोऽतीव निपुणः। स्थाने-स्थाने 'बहुल-अमा-पञ्चास्य-द्विजराज'-प्रभृति शब्दानां नूतनमर्थं विधाय महाकविः प्रयोगो विहितवान्। निदर्शनार्थं यथा—

विरहिभिर्बहुमानमवापि यः स बहुलः खलु पक्ष इहाजनि।
तदमितिः सकलैरपि यत्र तैर्व्यरचि सा च तिथिः किममा कृता॥ (४।६७)

मोहाय देवाप्सरसां विमुक्तास्तराः शराः पुष्पशरेण शङ्के।
पञ्चास्यवत्पञ्चशरस्य नाम्नि प्रपञ्चवाची खलु पञ्चशब्दः॥ (२२।१९)

सकलया कलया किल दंष्ट्रया समवधाय वधाय विनिर्मितः।
विरहिणीगणचर्वणसाधनं विधुरतो द्विजराज इति श्रुतिः॥ (४।७२)

इत्थं वयं पश्यामः यत् पाण्डित्यप्रकर्षान्वितो महाकवि श्रीहर्षः रसच्छन्दोऽलंकारभावादिविधाने अतिशयेन पटुः। अस्य कविता सरसया पद्धत्या प्रच-

लन्ती मध्ये-मध्ये दार्शनिकतत्त्वान्युपन्यस्य महाकविना कठिनीकृता। एतदेव मनसिकृत्य कविना स्वयमेव निगदितम्—

ग्रन्थग्रन्थिरिह क्वचित् क्वचिदपि न्यासि प्रयत्नान्मया
प्राज्ञम्मन्यमना हठेन पठिती माऽस्मिन् खलः खेलतु।
श्रद्धाराद्धगुरुःश्लथीकृतदृढग्रन्थिःसमासादय-
स्त्वेतत्काव्यरसोर्मिमज्जनसुखव्यासज्जनं सज्जनः॥

अहो! अस्य महाकवेः शेमुषी धन्या, यस्यै तदीयः प्रतिद्वन्द्वी अपि श्लाघते एवम्—

हिंस्राः सन्ति सहस्रशोऽपि विपिने शौण्डीर्यवीर्योद्यता-
स्तस्यैकस्य पुनः स्तुवीमहि महः सिंहस्य विश्वोत्तरम्।
केलिः कोलकुलैर्मदो मदकलैः कोलाहलं नाहलैः
संहर्षो महिषैश्च यस्य मुमुचे साहंकृते हुंकृते॥

इत्थमेभिः निदर्शनैः समासेन वयं कथयितुं शक्नुमः यत् चिन्तामणिचिन्तनाधिगतविविधवैदुष्यविभूषितोऽयं महाकविः श्रीहर्षः पाण्डित्ये रसच्छन्दोऽलंकारभावादिविधाने समस्तान् कविवरानतिशेते—इति शम्।

( २ ) प्रश्नः—नैषधीयचरितस्य महाकाव्यत्वं प्राच्यभारतीयकाव्यशास्त्रदृशा संसाध्यताम्। ( १९७८ ई० )

अथवा

महाकाव्यलक्षणं विलिख्य तस्य नैषधीयचरिते सद्भावः प्रतिपाद्यः।
( १९८४ ई० )

उत्तरम्—कवेः कर्म काव्यमित्यभिधीयते सुधीभिः। काव्यस्य प्राधान्येन द्वौ भेदौ भवतः—श्रव्यकाव्यं दृश्यकाव्यञ्चेति। श्रव्यकाव्यस्यापि 'गद्यं पद्यं चम्पूकाव्यञ्चे'ति भेदेन भागत्रयं संजायते। तत्र पद्यकाव्यस्य महाकाव्यं-खण्डकाव्य-मुक्तककाव्यञ्चेतिरूपेण त्रयो भेदाः विद्वांसोऽङ्गीकुर्वन्ति। गद्यकाव्यस्य कथा—आख्यायिका चेत्युभौ भेदौ स्तः।

महाकाव्यलक्षणम्—प्राच्यभारतीय काव्यशास्त्रदृशा महाकाव्यस्य संरचना सर्गबद्धाऽष्टसर्गतोऽन्यूना भवति। महाकाव्यस्येतिवृत्तमैतिहासिकमथवा केनाऽपि महापुरुषेणान्वितं सद्राजते। नायकश्चास्य सुरकुलोत्पन्नेन सद्वंशोद्भवेन क्षत्रियेण वा भवितव्यम्। शृङ्गार-वीर-शान्तरसेष्वेकतमस्य प्रधानरूपेण वर्णनमावश्यकम्। अन्ये रसाः गौणरूपेण तत्र स्थितिं लभन्ते। अधिसर्गमेकवृत्तप्रयोगेण साकमन्ते

वृत्तपरिवर्तनेन भाव्यम् । पुरुषार्थचतुष्टयेषु धर्मार्थकाममोक्षेषु कस्याप्येकस्यावाप्तिः महाकाव्यस्योद्देश्यं भवति । यत्र तत्र सतां कीर्तिगानम् असतां विगर्हणमावश्यकम् । सुधियो महाकाव्ये सन्ध्या-सूर्योदय-रात्रि-चन्द्रमा-प्रदोषान्धकार-दिवस-प्रातःकाल-पर्वत-षडर्तु-वन-सागर-संयोग-वियोग-युद्ध-यात्रा-परिणय-पुत्रोत्पत्ति-अभ्युदयादीनां यथावसरं साङ्गोपाङ्गवर्णनमावश्यकं मन्वते । महाकाव्यस्याभिधानं कवेश्चरित्रनायकस्य चरित्रस्याभिधानोपरि वाऽऽश्रितं भवति। एतत्सर्वं सूक्ष्मेक्षिकया विभाव्य आचार्यविश्वनाथः स्वीये साहित्यदर्पणे महाकाव्यस्य लक्षणमधोनिर्दिष्टरूपेण विनिर्धारयति—

'सर्गबन्धो महाकाव्यं तत्रैको नायकः सुरः ।
सद्वंशः क्षत्रियो वाऽपि धीरोदात्तगुणान्वितः ॥
एकवंशभवा भूपाः कुलजाः बहवोऽपि वा ॥
श्रृङ्गारवीरशान्तानामेकोऽङ्गी रस इष्यते ।
अङ्गानि सर्वेऽपि रसाः सर्वे नाटकसन्धयः ।
इतिहासोद्भवं वृत्तमन्यद्वा सज्जनाश्रयम् ॥
चत्वारस्तस्य वर्गाः स्युस्तेष्वेकं च फलं भवेत् ।
आदौ नमस्क्रियाशीर्वा वस्तुनिर्देश एव वा ॥
क्वचिन्निन्दा खलादीनां सतां च गुणकीर्तनम् ।
एकवृत्तमयैः पद्यैरवसानेऽन्यवृत्तकैः ॥
नातिस्वल्पा नातिदीर्घाः सर्गा अष्टाधिका इह ।
नानावृत्तमयः क्वापि सर्गः कश्चन् दृश्यते ॥
सर्गान्ते भाविसर्गस्य कथायाः सूचनं भवेत् ।
सन्ध्यासूर्येन्दुरजनीप्रदोषध्वान्तवासराः ॥
प्रातर्मध्याह्नमृगयाशैलर्तुवनसागराः ।
सम्भोगविप्रलम्भौ च मुनिस्वर्गपुराध्वराः ॥
रणप्रयाणोपयममन्त्रपुत्रोदयादयः ।
वर्णयीयं यथायोगं साङ्गोपाङ्गा अमी इह ॥
कवेर्वृत्तस्य वा नाम्ना नायकस्येतरस्य वा ।
नामास्य सर्गोपादेयकथया सर्गनाम तु ॥" इत्यादि ॥

**नैषधे महाकाव्यलक्षणानां सद्भावः**—साम्प्रतं वयमशेषान् महाकाव्यलक्षणान् मनसि निधाय नैषधमहाकाव्यस्य परीक्षणं कुर्मः । पाण्डित्यप्रकर्षान्वितेन

श्रीहर्षेण विरचिते नैषधे द्वाविंशतिसर्गाः २८३० श्लोकाश्च विराजन्ते। महाकाव्यस्यास्य नायको नलः सद्वंशप्रसूतः नायिका च भैमी उच्चकुलोत्पन्ना विद्येते। ग्रन्थस्यास्य सरसावर्णनपद्धतिः शृङ्गार-प्रकर्षपूर्णकथा च सहृदयहृदयान्यावर्जयतः। महाकाव्येऽस्मिन् शृङ्गाररसस्य सम्भोगविप्रलम्भञ्चेति पक्षद्वयं समानरूपेण संशोभते। भैम्याः कुचकलशयोः वर्णनं कविः कियच्चारुतया करोति। निदर्शनार्थं यथा—

अपि तद्वपुषि प्रसर्पतोर्गमिते कान्तिभरैरगाधताम्।
स्मरयौवनयोः खलु द्वयोः प्लवकुम्भौ भवतः कुचावुभौ॥

अलङ्काराणां चित्रणेऽपि महाकविः श्रीहर्षोऽतीव सफलः। श्लेष-यमक-उत्प्रेक्षा-अर्थान्तरन्यास-अपह्नुति-वक्रोक्तिप्रभृत्यलङ्काराणां सुस्पष्टं चित्रणं नैषधे सम्प्राप्यते। महाकाव्यलक्षणे परमावश्यकत्वेन वर्णितानां युद्ध-मन्त्रणा-पुत्रजन्म-जलविहार-मद्यपान-ऋतुवर्णनादीनामभावोऽस्मिन् काव्ये संदृश्यते। वीर-भयानक रौद्ररसादीनामपि वर्णनं महाकविना नैव विहितम्। एवं समासेन सूक्ष्मेक्षिकया समीक्षणेन वयं कथयितुं पारयामः यन्नैषधमहाकाव्यं संस्कृतवाङ्मये सर्वान् काव्यानतिशय्य किमपि विशिष्टमद्वितीयं च स्थानं धत्ते। 'उदिते नैषधे काव्ये क्व माघः क्व च भारविः' 'नैषधं विद्वदौषधम्' प्रभृतयः प्राचां सुधीनां सूक्तयोऽपि तत्त्वमेनं द्रढयन्तीति शम्।

( ३ ) प्रश्नः—'नैषधं विद्वदौषधम्' इति प्राच्योक्तिं नैषधीयचरितमहाकाव्यस्थैरुदाहरणैर्व्याख्यायताम्। ( १९७८ ई० )

अथवा

'उदिते नैषधे काव्ये क्व माघः क्व च भारविः' इति प्राचां सुधीनां सूक्तिः समीक्षणीया।

उत्तरम्—संस्कृतवङ्मयेऽधिगतवैदुष्यप्रकर्षः श्रीहर्षः सबहुमानं सुधीभिः संस्मर्यते। कविपुङ्गवेनानेन नैके ग्रन्थाः विरचिताः। तेषु प्रमुखतमाः विदुषां तोषाय आधस्ताद्विनिर्दिश्यन्ते—१. स्थैर्यविचारप्रकरणम् २. विजयप्रशस्ति, ३. खण्डनखण्डखाद्यम्, ४. गौडोर्वीशकुलप्रशस्तिः, ५. अर्णववर्णनम्, ६. छिन्दप्रशस्तिः, ७. शिवशक्तिसिद्धिः, ८. नवसाहसाङ्कचरितचम्पू ९. नैषधीयचरितञ्चेति।

सुरभारतीकाव्यपरम्परायां नैषधीयचरितस्य स्थानं बृहत्त्रय्यां विनिर्धारितं विद्यते। खण्डनखण्डखाद्यन्तु दर्शनशास्त्रस्यानुपमं रत्नम्। महाकवेः श्रीहर्षस्य

दर्शनशास्त्रविषयकं पाण्डित्यमनेनातीव सुस्पष्टं भवति। विनिर्दिष्टमहाकाव्य-लक्षणेषु बाहुल्यं स्वस्मिन् दधद् नैषधीयचरितमहाकाव्यं महाकवेः श्रीहर्षस्य कीर्तिज्योत्स्नां चतुर्दिक्षु वितनोति। तदीयो हि नैषधीयचरितस्थः सप्तदशः सर्गो दर्शनशास्त्रविषयकवैदुष्यस्य प्रभूतं निदर्शनं सन् शोभते। चार्वाकमतस्य तत्र मण्डनं खण्डनञ्च एतावत्या चारुतयाऽनुष्ठितं यदसौ सर्गः दर्शनशास्त्रमिव प्रतिभाति। चार्वाकाणां—

यावज्जीवेत् सुखं जीवेदृणं कृत्वा घृतं पिबेत्।'
भस्मीभूतस्य देहस्य पुनरागमनं कुतः॥

इत्येष उद्घोष भुवनप्रथित एव विद्यते। कविवरेण्यो श्रीहर्षः एतान् एव नास्तिकदर्शनसम्बन्धिनः सिद्धान्तान् कियच्चारुतया स्वस्मिन् ग्रन्थे निबध्नातीति सुधियोऽवलोकयन्तु—

'कः शमः क्रियतां प्राज्ञाः प्रियाप्रीतौ परिश्रमः।
भस्मीभूतस्य देहस्य पुनरागमनं कुतः॥
स्वं च ब्रह्म च संसारे मुक्तौ तु ब्रह्म केवलम्।
इति स्वेच्छित्तिमुक्त्युक्तिवैदग्धी वेदवादिनाम्॥
अग्निहोत्रं त्रयी तन्त्रं त्रिदण्डं भस्मपुण्ड्रकम्।
प्रज्ञा-पौरुषनिःस्वानां जीवो जल्पति जीविका॥'

दानधर्मस्य वैयर्थ्यतां महाकविः श्रीहर्षः मनोहरया शैल्या प्रतिपादय-त्यधस्तात्—

किं वित्तं दत्तुष्टेयमदातरि हरिप्रिया।
दत्त्वा सर्वं धनं मुग्धो बन्धनं लब्धवान् बलिः॥

समस्ते स्वपि दर्शनेषु कवेरप्रतिहता गतिरासीदित्यत्र नास्ति कश्चन सन्देहः। सांख्ययोगदर्शनपाटवं प्रति पद्यमिदं प्रमाणम्—

क्षणनीरवया यया निशि श्रितवप्रावलियोगपट्टया।
मणिवेश्ममयं स्म निर्मलं किमपि ज्योतिरबाह्यमिज्यते॥

महाकवेः श्रीहर्षस्य नैषधीयं चरितं कलापक्षपतिनां काव्यानां शिरोमुकुट-मणिः। परं ग्रन्थरत्नस्यास्य रसं सौन्दर्यञ्च स एवोपभोक्तुं क्षमः, यः सहृदयः सन्नपि शास्त्रार्थतत्त्वावगमे महान् प्रतिभाशाली विद्यते। स्वकाव्यस्य काव्यान्त-रेभ्यः वैशिष्ट्यं कविः स्वयमेव मनुते—

यथा यूनस्तद्वत् परमरमणीयापि रमणी
कुमाराणामन्तःकरणहरणं नैव कुरुते ।
मदुक्तिश्चेदन्तर्मदयति सुधीभूय सुधियः
किमस्या नाम स्यादरसपुरुषानादरभरैः ॥

सामान्यधियः पुमांसः कवेः काव्यरसमात्मसात् कर्तुं न सक्षमाः सन्ति। यथाऽधस्ताल्लिखिते श्लोके 'व्यतिभाते' इति पदस्य व्याकरणविषयकं सौन्दर्यं स एवास्वादयितुं क्षमेत यो हि वैयाकरणो विद्यते—

अपि लोकयुगं दृशावपि श्रुतदृष्टा रमणीगुणा अपि ।
श्रुतिगामितया दमस्वसुर्व्यतिभाते सुतरां धरापते ॥

अहो ! अत्र वचनश्लेषक्रियाकारकदीपकतुल्ययोगितालङ्काराणां रुचिरता कियती चित्ताकर्षका ? कविपुङ्गवोऽयमन्येषामलङ्काराणामपि चित्रणेऽतीव सफलः । श्लेषानुरागी महाकविः श्रीहर्षः स्वीये नैषधीयचरिते एकेनैव श्लोकेन पुरन्दराग्नियमवरुणनलान् पञ्चापि वर्णयतीत्येतद् महदाश्चर्यम् । यथा—

देव पतिर्विदुषि नैषधराजगत्या निर्णीयते न किमु न व्रियते भवत्या ।
नायं नलः खलु तवाति महानलाभो यद्येनमुज्झसि वरः कतरः पुनस्ते ॥

महाकवेः श्रीहर्षस्य नैषधीयचरितं शृङ्गाररसप्रधानम्, परं तत्र वीरकरुण हास्यादीनामप्यस्तित्वं सचेतसोऽनु भवन्ति । एकादश-द्वादश-त्रयोदशसु सर्गे वीररसस्य स्रोतस्विनी सरयं प्रवहन्ती सम्यग् संदृष्टा भवति, परं कवेः स वीर रसो मानसे वीरभावान् न जनयति, अपितु शृङ्गारीव स प्रतीयते । षोडशे सर्गे हास्यरसच्छटाऽपि स्मेरानना समवलोक्यते । यथा—

स किञ्चिदूचे रचयन्तु ते मनोपहारमन्त्राङ्ग रुचेर्यथोचितम् ।
पिपासतः काञ्चन् सर्वतोमुखं तवार्पयन्तामपि काममोदनम् ॥

महाकवेरस्य करुणरसः कियान् रोचक इत्यत्र तु सुधिय एव प्रमाणम् निदर्शनार्थं यथा—

मदर्थसन्देशमृणालमन्थरः प्रियः कियद्दूर इति त्वयोदिते ।
विलोकयन्त्या रुदतोऽथ पक्षिणः प्रिये स कीदृग् भविता तव क्षणः ॥

प्रकृतिपेशलता भाषायाः कमनीयता मानवधर्मविचारवैशद्यञ्च कवेरस्य काव्ये पदे पदे दृश्यते । नरपतिः नलः स्वयं स्मरोपतप्तोऽपि भैमीं नायाचत इति तस्य धैर्यस्य परां कोटिमवगमयन्ति । कविस्तत्र स्वयमात्मना निगदति—

स्मरोपतप्तोऽपि भृशं न स प्रभुर्विदर्भराजं तनयामयाचत ।
त्यजन्त्यसूञ्शर्म च मानिनो वरं त्यजन्ति न त्वेकमयाचितव्रतम् ॥

मानवानां नियतिपरवशत्वमुपरि क्षणं दृष्टिः निक्षिप्यताम्—

अवश्यभव्येष्वनवग्रहग्रहा यया दिशा धावति वेधसः स्पृहा ।
तृणेन वात्येव तयानुगम्यते जनस्य चित्तेन भृशावशात्मना ॥

मानवचित्ते वर्तमानायास्त्रपायाश्चित्रणं श्लेषमाध्यमेन कियत्या चित्ताकर्षक-शैल्या कविः दमयन्तीमुखेन कारयतीति विद्वांसः पश्यन्तु—

मनस्तु यं नोज्झति जातु यातु मनोरथः कण्ठपथं कथं सः ।
का नाम बाला द्विजराजपाणिग्रहाभिलाषं कथयेदभिज्ञा ॥

इत्थं नैषधीयचरितस्य सूक्ष्मेक्षिकयाऽध्ययनेन, महाकवेः श्रीहर्षस्य निखिल-शास्त्रविषयकं पाण्डित्यप्रकर्षं पदलालित्ययोजनां, यथास्थाने श्लेषसमासोक्ति-रतिशयोक्त्याद्यलङ्काराणामनुपमं चित्रणञ्च मनसि विभाव्य वयं समासेन कथ-यितुं पारयामो यदयं महाकविः सर्वान् कवीश्वरान् अतिशेते । कविवरेण्यस्या-स्य विषये प्राचां सुधीजन समुदायानां मध्ये प्रथिता भणिति नितरामवितथैव—

तावद्भा: भारवेर्भाति यावन्माघस्य नोदयः ।
उदिते नैषधे काव्ये क्व माघः क्व च भारविः ॥

एतावता निखिलैर्जनैः कवेरस्य महाकाव्यं नैषधीयचरितं सबहुमानं सेवितव्यम् । वैदुष्याधिगताय नूनमेवैतत् काव्यौषधं सुधीभिरास्वादनीयं 'नैषधं विद्वदौषधम्' इत्युक्तेश्चरितार्थतामापादनीयञ्चेति शम् ।

**( ४ ) प्रश्नः—राज्ञो नलस्य चरितं नैषधीयचरितानुसारि वर्ण्यताम् ।**
**( १९७८ ई० )**

उत्तरम्—प्रातःस्मरणीयः पुण्यश्लोको नरपतिः नलो नैषधीयचरितमहा-काव्यस्य धीरोदात्तनायकोऽस्ति । आचार्यविश्वनाथः स्वीये साहित्यदर्पणे धीरो-दात्तनायकस्य यान् यान् गुणान् वर्णयति ते सर्वे राज्ञि नले विद्यन्ते । यथा—

अविकत्थन क्षमावानतिगम्भीरो महासत्त्वः ।
स्थेयान्निगूढमानो धीरोदात्तो दृढव्रतः कथितः ॥ (सा० द० ३।३२)

दशरूपककारेणाऽपि ये नायकगुणाः वर्णितास्तेऽप्यत्रास्तित्वं दधते । यथा—

नेता विनीतो मधुरस्त्यागी दक्षः प्रियंवदः ।
रक्तलोकः शुचिर्वाग्मी रूढवंशः स्थिरो युवा ॥

बुद्धयुत्साहस्मृतिप्रज्ञाकलामानसमन्वितः ।
शूरो दृढश्च तेजस्वी शास्त्रचक्षुश्च धार्मिकः ॥
भेदैश्चतुर्धा ललितशान्तोदात्तोद्धतैरयम् ।

सुषमासम्पन्नः—नैषधीयचरितस्य नायको नरपतिः नलः सौन्दर्ये मनसिज मतिशय्य लोके अपरानङ्ग इव विभाति । भुवोऽशेषाः रमण्यस्तस्मै स्पृहयन्ति यथा—

न का निशि स्वप्नगतं ददर्श तं, जगाद गोत्रस्खलिते च का न तम् ।
तदात्मताध्यातधवा रते च का चकार वा न स्वमनोभवोद्भवम् ॥

निर्जितकन्दर्पस्य नलस्याननस्य तुलनायामुपमाने दारिद्र्यातिशयमनुभव महाकविः श्रीहर्षः । यथा—

सरोरुहं तस्य दृशैव निर्जितं, जिताः स्मितेनैव विधोरपि श्रियः ।
कुतः परं भव्यमहो महीयसी तदाननस्योपमितौ दरिद्रता ॥

शूरः—महासत्त्वान्वितो नलः नैषधीयचरिते अतीव शूररूपेण चित्रितोऽस्ति विजययात्रासु तत्पृतनाभिः समुत्थापितं रजश्चन्द्रमसि कलङ्कत्वं दधातीति वर्णन मत्र प्रमाणम् । यथा—

यदस्य यात्रासु बलोद्धतं रजः स्फुरत्प्रतापानलधूममञ्जिम ।
तदेव गत्वा पतितं सुधाम्बुधौ दधाति पङ्कीभवदङ्कतां विधौ ॥

धर्मप्रियः—स्मरजेता प्रतापानलसमन्वितो नरपतिः नलः यावान् वीर साहसप्रियश्च तावानेव न्यायप्रियो धर्मरतश्च आसीत् । तस्य राज्ये पापप्रिय कलिरपि तपस्यां कुर्वन् कृशतां दधाविति महाकवेः श्रीहर्षस्य वर्णनं निदर्शनरूपेण संतिष्ठते । यथा—

पदैश्चतुर्भिः सुकृते स्थिरीकृते कृतेऽमुना के न तपः प्रपेदिरे ?
भुवं यदेकाङ्घ्रिकनिष्ठया स्पृशन्दधावधर्मोऽपि कृशस्तपस्विताम् ॥

शास्त्रवेत्ता—न्यायप्रियो निसर्गसुन्दरः नैषधः सर्वासां विद्यानां विज्ञाता आसीदिति सर्वे सुधियोऽवगच्छन्त्येव । महाकविः श्रीहर्षः तस्य चतुर्दशविद्या विज्ञातृत्वमधस्ताल्लिखिते श्लोके प्रतिपादयति । यथा—

अधीतिबोधाचरणप्रचारणैर्दशाश्चतस्रः प्रणयन्नुपाधिभिः ।
चतुर्दशत्वं कृतवान्कुतः स्वयं न वेद्मि विद्यासु चतुर्दशस्वयम् ॥

दानपरायणः—याचकव्रातानां दारिद्र्यनाशाय भूपतिः नलोऽद्वितीयो दाता सिद्ध्यति । अर्थिभ्यः समधिकं दत्त्वाऽपि नरपतिः नलस्तोषं न समवाय । अय मेव हेतुः यत् स स्वशिरःस्थितान् केशान् अयशरूपेणामन्यत् । यथा—

विभज्य मेरुर्न यदर्थिसात्कृतो न सिन्धुरुत्सर्गजलव्ययैर्मरुः ।
अमानि तत्तेन निजाऽयशोयुगं द्विफालवद्धाश्चिकुराः शिरःस्थितम् ॥

कारुणिकः—भैमीविरहसन्तप्तो नरपतिः नलः निजोपवने सम्भ्रमन् समुत्कण्ठा-वशात् हिरण्मयं हंसं संगृहीतवान् । परं तस्य—

मदेकपुत्रा जननी जरातुरा नवप्रसूतिर्वरटा तपस्विनी ।
गतिस्तयोरेष जनस्तमर्दयन्नहो विधे ! त्वां करुणा रुणद्धि नो ॥

—इति कारुणिकं विलापमाकर्ण्य झटिति तमुत्ससर्ज । एतेन विज्ञायते यत् [नृ]प महान् दयार्द्रचित्तः आसीत् ।

सङ्गीतकलाकुशलः—भूपतिः नलः सङ्गीतकलामर्मज्ञः आसीदित्यत्र नास्ति [क]ाचित् संशीतिः । तत्त्वमिदं विज्ञाय प्रकृतिरपि भूपतेः नलस्य स्वागतं नृत्य-[ग]ीतवाद्यादिभिः विदधाति । यथा महाकविः श्रीहर्षः नैषधीयचरितस्य प्रथमसर्गे [नि]गदति ।

विलासवापीतटवीचिवादनात्पिकाऽलिगीतेः शिखिलास्यलाघवात् ।
वनेऽपि तौर्यत्रिकमारराध तं, क्व भोगमाप्नोति न भाग्यभाग्जनः ॥

उदारचेता—दमयन्त्यां स्वयमनुरक्तोऽपि पुरन्दराग्निवरुणयमादिदिक्पालानां [स]ंदेशमादाय भैम्या अन्तिके नरपतेः नलस्य गमनं तस्यौदार्यं प्रथयति ।

इत्थं नैषधीयचरितस्य सूक्ष्मपर्यालोचनेन वयं विद्मः यदस्य महाकाव्यस्य [ना]यकः नरपतिः नलः सुषमासमन्वितः, शूरः, विद्वान्, धर्मप्रियः, न्यायप्रियः; [क]र्तव्यपरायणः, प्रणयी, समुदारचेता च आसीत् । धीरोदात्तनायकस्य शास्त्र-[व]र्णिताः सर्वे गुणाः राज्ञि नले विद्यन्त इत्यत्र नास्ति काचित् विप्रत्तिरिति शम् ।

( ५ ) प्रश्नः—भैम्याश्चरितं नैषधीयग्रन्थानुसारि विविच्यताम् ।

( १९७९ ई० )

उत्तरम्—सौन्दर्यातिशयसमन्विता विदर्भराजतनया भैमी नैषधीयचरित-[म]हाकाव्यस्य प्रधानभूता नायिका विद्यते । तस्यामादर्शनायिकायाः सर्वे गुणाः [स]माविष्टाः सन्ति । समासेन तान् गुणानाधारीकृत्य वयमत्र किञ्चिद्विचारयामः—

अनन्यसुन्दरी—कुण्डिनपुर्या अधिपतेः भूपतेः भीमसेनस्यात्मजा दमयन्ती [त्रि]लोकललनाललामभूता अतीव कमनीया वर्तते । तस्याः कमनीयकमवेक्ष्य [त्रि]भुवने को नाम जनः मुग्धो न भवति । चन्द्रमसः सारभागं समाकृष्य दम-[य]न्त्याः सौन्दर्यातिशयविनिर्माणं वेधसा विहितमित्येवंरूपेण कल्पते महाकविः [श्री]हर्षः । यथा—

हृतसारमिवेन्दुमण्डलं दमयन्तीवदनाय वेधसा ।
कृतमध्यविलं विलोक्यते धृतगम्भीरखनीखनीलिम ॥

एवं भैम्याः विभिन्नाङ्गानां सौन्दर्यातिशयस्य वर्णनं विदधन् तस्याः कुच-द्वयस्य समुपवर्णनं कियच्चित्ताकर्षकमित्यत्र सचेतस एव प्रमाणम् । निदर्शनार्थं यथा—

अपि तद्वपुषि प्रसर्पतोर्गमिते कान्तिझरैरगाधताम् ।
स्मरयौवनयोः खलु द्वयोः प्लवकुम्भौ भवतः कुचावुभौ ॥

अन्यच्च—

कलशे निजहेतुदण्डजः किमु चक्रभ्रमकारितागुणः ।
स तदुच्चकुचौ भवन्प्रभाझरचक्रभ्रममातनोति यत् ॥

उच्चकुलप्रसूता—त्रिभुवनललनाललामभूता भैमी महोच्चकुले सञ्जाता विद्यते । एतावता तस्यां विनयशीलतायाः, धैर्यस्य, गाम्भीर्यस्य चाद्भुतं सम्मि-श्रणं दृश्यते । त्रपा तस्याः मण्डनं, धैर्यं धनं, शालीनता च प्रेयसीरिवासीत् ।

अनुरागवती—त्रिभुवनाऽङ्गनाऽऽदर्शभूता भैमीरियं स्वपितुरन्तिके वन्दीजनै-नरपतेः नलस्य कीर्तिगानं श्रावं श्रावं राज्ञि नलेऽनुरक्ता सञ्जाता । हिरण्मयं हंसः यदा दमयन्त्या उपवने समुपेत्य तस्या अन्तिके नैषधस्य गुणगानं विधा-भैम्याः हृद्गताशयं वेदितुमभिलषति, तदा त्रपान्विता भैमी शालीनतायाः पर-कोटिं सन्दर्शयती ब्रूते—

मनस्तु यं नोज्झति जातु यातु मनोरथः कण्ठपथं कथं सः ?
का नाम बाला द्विजराजपाणिग्रहाऽभिलाषं कथयेदभिज्ञा ? ॥

अन्यच्च—

इतीरिता पत्त्ररथेन तेन ह्रीणा च हृष्टा च बभाण भैमी ।
चेतो नलङ्कामयते मदीयं, नाऽन्यत्र कुत्राऽपि च साऽभिलाषम् ॥

पतिव्रता—नैषधीयचरितमहाकाव्यानुसारेण भैमी पतिव्रतानामग्रेसर-सन्दृश्यते । राज्ञि नले समनुरक्ता सा पुरन्दराग्नियमवरुणप्रभृतिदिक्पालानां तिरस्करोति । स्वयम्वरे सा पञ्चनलान् निर्वर्ण्य स्वाभीष्टं नलं परिचेतुमक्षम-सती देवानां शरणं गतवती । सुरा अपि तस्याः पातिव्रत्यधर्मप्रभावेण सन्तुष्टाः प्रसन्नाश्च भूत्वा नलपरिज्ञानाय भैम्यै शेमुषीं प्रदाय शुभाशिषा च संयोज्य दिवं गताः ।

एवं नैषधीयचरितमहाकाव्यस्य सूक्ष्मेक्षिकया पर्यालोचनेन विज्ञायते यत् आदर्शनायिका गुणसमन्विता विदर्भराजसुता भैमी स्वविनय-दया-दाक्षिण्य-

दिभिर्गुणैः त्रिभुवनस्य सकलाः वनिताः समतिक्रम्य सर्वासां मूर्द्धानमधिरोहति। अयमेव हेतुर्यत् हिरण्मयो हंसस्तस्याः प्रशंसां कुर्वन् ब्रूते—

धन्याऽसि वैदर्भि ! गुणैरुदारैर्यया समाकृष्यत नैषधोऽपि।
इतः स्तुतिः का खलु चन्द्रिकाया यदब्धिमप्युत्तरलीकरोति॥

इत्थं वयं कथयितुं पारयामः यन्नैषधीयचरिते दमयन्ती आदर्शनायिकारूपेण चित्रिता अस्तीति शम्।

(६) प्रश्नः–नारदेन्द्रसंवादः स्वसंस्कृतेन चारु विलेख्यः।(१९८५ई०)

उत्तरम्—नैषधीयचरितमहाकाव्यस्य पञ्चमे सर्गे देवर्षिः नारदः सुराधिपतेः शक्रस्य सन्दर्शनाय दिवमगात्। तत्रामरपतिना पुरन्दरेण विहितां नैकविधां सपर्यां संगृह्य मुनिपुङ्गवः स तेन साकं बहुविधसंलापान् विहितवान्। किञ्चित् कालानन्तरं सुरपतिः शक्रः मुनिवरेण्यं नारदं प्रति जिज्ञासयामास—भो ऋषे ! परप्रहरणैः निहतानां भूपालानामागमनमत्र दिवि कथं न भवति ? साम्प्रतं महिपतिवंशाः वीरकरीरान् न प्रसुवते किम् ? ये सङ्गरे भुवि परप्रहरणैः प्राणान् त्यजन्ति। यतो हि एतादृशाः राजानः मद्विहितामतिथिसत्कारं लभन्ते। यथा उक्तमपि—

द्वाविमौ पुरुषौ लोके सूर्यमण्डलभेदिनौ।
परिव्राड् योगयुक्तश्च रणे चाऽभिमुखो हतः॥

एतेनाजौ सम्मुखेऽभिहतानां महिपतीनामागमनाभावेनाधुना मद्विभूतीनां सदुपयोगो न सञ्जायते। यथा सुरपतिः स्वयमेव निगदति—

साऽभिशापमिव नाऽतिथयस्ते मां यदद्य भगवन्नुपयान्ति।
तेन न श्रियमिमां बहु मन्ये स्वोदरैकभृतिकार्यकदर्याम्॥

इत्थं नरपतीनां देवलोकमनागमने कारणं निगद्य भवन्तो मदीयां शङ्कामपनयन्तु।

मुनिश्रेष्ठो नारदः पाकशासनपदमधिरोहतोऽपि देवेन्द्रस्य नम्रताऽतिशयमतिथिमन्तरेण निजसम्पदि निरौत्सुक्यञ्चावेक्ष्य विस्मितः सन् स्मितपुरस्सरं निजगाद—शतयागसुकृतफलेनाधिगतायां स्वसम्पदि यदि भवतामतिथिमन्तरेणेवमनादरो विद्यते, तत्तुनितरां श्लाघनीयः। प्रभूतसम्पदां स्वामिनः एवंविधो विनयोऽतीवाश्चर्यंकरम्। अतिथिसत्कारविषये भवतां विचारस्तव ज्ञानातिशयं प्रथयति। युधिसम्मुखेऽभिहताः राजानो दिवि नागच्छन्ति साम्प्रतं तत्र त्रिभुवनललनाललामभूता दमयन्ती हेतुत्वेन राजते। यौवनावस्थायां वर्तमानाया-

स्तस्याः स्वयम्बरे समुपस्थातुं पृथिव्याः सर्वे नरपतयो विहितोद्योगा विद्यन्ते। विदर्भराजतनया भैमी येषु येष्वलङ्कारेषु गुणेषु वा सानुरागा विद्यते, तस्य तस्य साधने विहितप्रयत्नानां महीपालानां साम्प्रतं सङ्गरस्य कथैव न वर्तते । अयमेव हेतुः यत् क्षितेः भूपालाः भवतां पार्श्वे दिवि नागच्छन्ति । आमुना प्रकारेण विनिगद्य महर्षिः नारदः पुनः भूतलमाजगामिति शम् ।

( ७ ) प्रश्नः—नैषधीयचरितमहाकाव्यस्य प्रथमसर्गादारभ्य पञ्चमसर्गं यावत् कथानकं समासेनोपवर्ण्यताम् ।

उत्तरम्—नैषधीयचरितमहाकाव्यस्य समस्तं कथानकं सुविस्तृतरूपेण द्वाविंशतिसर्गेषु विभक्तं विद्यते । अस्मिन् नलभैम्योः स्नेहकथायाः सरसं समाकर्षकमालङ्कारिकञ्च वर्णनं समुपलभ्यते ।

प्रथमः सर्गः—महाकाव्यस्यास्य प्रथमे सर्गे महाकवि श्रीहर्षः नरपतेः नलस्य नैकविधां प्रशंसां विदधन् वर्ण्यविषयस्माविर्भावं विहितवान् भूपतेः नलस्य कीर्तिकथां समाकर्ण्य विदर्भराजतनया भैमी नलं प्रति समाकृष्टचित्ता भवति । महीपालो नैषधोऽपि भैमीं प्रति समाकृष्टमानसः सन् मानसविनोदाय हयं समारुह्य निजोपवनं प्रतिष्ठते । तत्र जलाशयस्यान्तिके हिरण्मयं हंसं वीक्ष्य तं स्वकरेण गृह्णाति । राजा संगृहीतो हंसः प्रथमं नृपतेरात्मानं मोचयितुं बहुप्रयासं विदधाति । विवशो भूत्वाऽन्ते सकरुणविलापं करोति यं समाकर्ण्य नरपतेः नलस्य मानसं दयार्द्रान्वितं सञ्जायते। एतावता तं हिरण्मयं हंसं काञ्चित् प्रतिश्रुतिं विना जहाति भूपतिः नलः ।

द्वितीयः सर्गः—अस्मिन् सर्गे हिरण्मयो हंसः राजानं नलं प्रति कृतज्ञतां विनिवेदयन् त्रिभुवनललनाललामभूतायाः दमयन्त्याः सौन्दर्यातिशयं समुपवर्ण्य भैम्या साकं नरपतेः नलस्योद्वाहं कारयितुं प्रतिश्रुतिं विदधाति । महीपालो नलः भैमीं प्रति स्वकीयं स्नेहमभिव्यनक्ति । तदनन्तरं हंसः भूपतिं नलं समामन्त्र्य कुण्डिनपुरं प्रतिव्रजति । यदा हंसः कुण्डिनपुरमुपैति, तथा भैमी निजालिभिः साकमुपवने विहारं करोतिस्म ।

तृतीय सर्गः—सर्गेऽस्मिन् विदर्भराजतनया भैमी स्वस्यान्तिकं समागतं हंसं ग्रहीतुं बहु प्रयासं विदधाति, परं स हंसः निबिड कानने पलायते । तत्र नरपतेः नलस्यासाधारणगुणानां स्वभावसौन्दर्यादीनाञ्च वर्णनं करोति । दमयन्ती नलसौन्दर्यस्य प्रचुरां प्रशंसां समाकर्ण्य तं प्रतिसमाकृष्टचित्ता सती स्वकीयं

स्नेहमभिव्यनक्ति । यस्माद्धेतोः हंसः स्वप्रयाणस्य सार्थकतामवगत्य राजानं नलं निजसाफल्यं सूचयति ।

चतुर्थः सर्गः—अस्मिन् सर्गे दमयन्त्याः विरहस्य सातिशयं वर्णनं विद्यते । येन सम्प्रेरितो भूत्वा भीमसेनः स्वात्मजायाः स्वयम्वरकरणाय विचारं विदधाति ।

पञ्चमः सर्गः—सर्गेऽस्मिन् देवर्षिनारदः भैम्याः लावण्यातिशयस्य वर्णनं सुराधिपतिना पुरन्दरेण साकं विदधाति । शक्रः भैमीसौन्दर्येण समाकृष्टचित्तः सन् तस्याः स्वयम्वरे भागं ग्रहीतुं वरुणयमाग्निप्रभृतिदेवैः सह प्रस्थानं करोति । ते देवाः स्वाः स्वाः दूत्यः दमयन्त्या अन्तिके सम्प्रेष्य भैमीजनकाय भीमसेनाय महर्घाण्युपायनानि प्रेषयन्ति । कुण्डिनपुरं प्रति प्रस्थितवन्तो देवाः मध्येमार्गं नरपते नलस्याप्रतिमं सौन्दर्यमवेक्ष्य नैराश्यभावमापन्नाः सन्तः तस्मै ईर्ष्यां कुर्वन्ति । तदनु शक्रप्रभृतयो देवाः स्वं स्वं परिचयं नैषधाय प्रदाय तं प्रति प्रार्थयन्ति यत् ते भैम्या अन्तिके दूतरूपेण गत्वा 'चतुर्ष्वस्मासु मध्ये कमप्येकं वृणुयात्' इत्येवरूपेण भैमीं प्रति निवेदनं कुर्युः पूर्वन्तु नलो दूतरूपेण दमयन्त्याः सविधे गमनाय स्वकीयामसहमतिमभिव्यनक्ति, परमनन्तरमङ्गीकृतवचनपरित्यागभयात् देवैस्तिरस्करिणीं विद्याञ्चादाय तदन्तिके प्रस्थानाय समुद्यतो भवतीति शम् ।

---

# श्लोकव्याख्याभागः

(१) निपीय यस्य क्षितिरक्षिणः कथां तथाऽऽद्रियन्ते न बुधाः सुधामपि।
नलः सितच्छत्रितकीर्तिमण्डलः स राशिरासीन्महसां महोज्ज्वलः॥
॥१।१॥

**प्रसङ्गः**—तत्रभवान् चिन्तामणिमन्त्रचिन्तनाधिगताऽलौकिकप्रतिभाप्रकर्षान्वितो महाकविः श्रीहर्षः स्वीयं नैषधाख्यं महाकाव्यं चिकीर्षुः विघ्नपरिसमाप्त्यर्थमादौ नरपतेः नलस्येतिवृत्तरूपं वस्तुनिर्देशात्मकं मङ्गलं समाचरन् 'पुण्यश्लोको नलो राजा पुण्यश्लोको युधिष्ठिरः। पुण्यश्लोका च वैदेही पुण्यश्लोको जनार्दनः॥ कर्कोटकस्य नागस्य दमयन्त्याः नलस्य च। ऋतुपर्णस्य राजर्षेः कीर्तनं कलिनाशनम्॥' इत्येवंविधस्य सूक्तेः विषयभूतं कलिमलदुरितापहारकं राजानं नलं समुपवर्ण्य स्वमहाकाव्यं समारभतेऽत्र।

**अन्वयः**—यस्य क्षितिरक्षिणः कथां निपीय बुधाः सुधाम् अपि तथा न आद्रियन्ते, सितच्छत्रितकीर्तिमण्डलः महसां राशिः महोज्ज्वलः स नल आसीत्।

**व्याख्या**—यस्य=प्रकृतस्य पुण्यश्लोकस्य, क्षितिरक्षिणः=महीपतेः, कथानायकभूतस्य नलस्येत्याशयः। कथाम्=उपाख्यानम्, निपीय=पानं विधाय, सादरमाकर्ण्येति भावः, बुधाः=सुधियः, सुरगणाश्च, सुधामपि=पीयूषमपि, ('पीयूषममृतं सुधा' इत्यमरः) तथा=तया रीत्या, न=नहि, आद्रियन्ते=समादरं विदधति, अमृतमुपेक्ष्य नलोपाख्यानं बहु मन्यन्त इत्याशयः। सितच्छत्रितकीर्तिमण्डलः=श्वेतातपत्रीकृतयशोमण्डलः, महसाम्=तेजसाम्, राशिः=पुञ्जः, ('पुञ्जराशी तूत्करः कूटमस्त्रियाम्' इत्यमरः) रविरिवेत्याशयः, महोज्ज्वलः=उत्सवदीप्यमानः, ('अथ क्षण उद्धर्षो मह उद्धव उत्सवः' 'महस्तूत्सवतेजसोः' इत्यमरः) नित्यमहोत्सवशालीति भावः, सः=प्रथितः, नलः=नलनामको नरपतिः, आसीत्=अभवत्।

अत्रामृतापेक्षया नलोपाख्यानस्याधिक्यवर्णनाद् व्यतिरेकालङ्कारः। तल्लक्षणं यथा—'आधिक्यमुपमेयस्योपमानान्न्यूनताऽथवा। व्यतिरेकः' (सा. द. १०।५२) इति। कीर्तिमण्डले सितच्छत्रस्य, राज्ञि नले महसां राशेरारोपाच्च रूपकालङ्कारः। तल्लक्षणं यथा—'रूपकं रूपितारोपाद्विषये निरपह्नवे' (सा. द.

१०।२८ ) इति। एवं व्यतिरेक-रूपकालङ्कारयोर्निरपेक्षतया स्थितिसत्वात् तिल-तण्डुलन्यायेन संसृष्टिरलङ्कारोऽत्र। तल्लक्षणं यथा—'मिथोऽनपेक्षयैतेषां स्थितिः संसृष्टिरुच्यते' ( सा. द. १०।९८ ) इति। वंशस्थवृत्तमत्र 'जतौ तु वंशस्थमुदीरितं जरौ' इति लक्षणात्।

समासः—क्षितिं रक्षतीति तच्छीलः, तस्य क्षितिरक्षिणः। 'सतश्च तच्छत्रं सितच्छत्रम्, सितच्छत्रं कृतं सितच्छत्रितम्, सितच्छत्रितं कीर्तिमण्डलं येन सः सितच्छत्रितकीर्तिमण्डलः। महैः=उत्सवैः, उज्ज्वलः=दीप्यमानः इति महोज्ज्वलः।

( २ ) पवित्रमत्रातनुते जगद्युगे स्मृता रसक्षालनयेव यत्कथा।
कथं न सा मद्गिरमाविलामपि स्वसेविनीमेव पवित्रयिष्यति ॥
॥ १।३ ॥

प्रसङ्गः—'कर्कोटकस्य नागस्य दमयन्त्या नलस्य च। ऋतुपर्णस्य राजर्षेः कीर्तनं कलिनाशनम्' ॥ इति सूक्तिमनुसरतः कलिकल्मषापहारकस्य राज्ञो नलस्याभिधानग्रहणं स्मरणमात्रेणापि श्रेयसे भवत्येतावता नलकथा सदोषमपि मद्वचनं नूनं विशुद्धं विधास्यतीति प्रोच्य महाकविः श्रीहर्षः स्वविनयमत्र प्रदर्शयति।

अन्वयः—अत्र युगे यत्कथा स्मृता (सती) रसक्षालनया इव जगत् पवित्रम् आतनुते, सा आविलाम् अपि स्वसेविनीम् एव मद्गिरं कथं न पवित्रयिष्यति।

व्याख्या—अत्र=अस्मिन्, युगे=कलौ, यत्कथा=नलस्योपाख्यानम्, स्मृता=स्मृतिपथमानीता सती, रसक्षालनया=जलप्रक्षालनेन. ( शृङ्गारादौ द्रवे वीर्ये देहधात्वम्बुपारदे' इति विश्वः, 'शृङ्गारादौ विषे वीर्ये गुणे रागे द्रवे रसः' इत्यमरः ) इव=यथा, जगत्=भुवनम्, पवित्रम्=पावनम्, आतनुते=विदधाति, सा=नलकथा, आविलाम् अपि=कलुषामपि, दोषयुतामपीति भावः, ( 'कलुषोऽनच्छ आविलः' इत्यमरः ) स्वसेविनीम् एव=नलवर्णनपरामेव, मद्गिरम्=मम वाणीम्, कथम्=केन प्रकारेण, न=नहि, पवित्रयिष्यति=पविष्यति, आवश्यमेव पवित्रां विधास्यतीति भावः।

अत्र 'रसक्षालनया इव=जलप्रक्षालनयेव' इत्यस्मिन् स्थले उत्प्रेक्षालङ्कारः। 'या स्मरणमात्रेणापि कलिकल्मषापहारिणी सा कीर्त्तनात् किमुतेति' कैमुतिकन्यायेनाऽर्थान्तरापत्त्या अर्थापत्तिरलङ्कारोऽत्र। तस्य सोदाहरणं लक्षणं यथा—

अर्थापत्तिः स्वयं सिध्येत्पदाऽर्थान्तरवर्णनम्।
स जितस्त्वन्मुखेनेन्दुः का वार्ता सरसीरुहाम् ॥ ( चन्द्रा० )

एतावता द्वयोरलङ्कारयोर्निरपेक्षतया स्थितिः सत्वात् संसृष्टिरलङ्कारोऽत्र। वंशस्थवृत्तम् ।

समासः—यस्य कथा यत्कथा । मम गिरं मद्गिरम् । रसेन=जलेन क्षालना रसक्षालना तया रसक्षालनया । स्वं सेवते तच्छीला, ताम् स्वसेविनीम् ।

( ३ ) अधीतिबोधाचरणप्रचारणैर्दशाश्चतस्रः प्रणयन्नुपाधिभिः ।
चतुर्दशत्वं कृतवान् कुतस्स्वयं न वेद्मि विद्यासु चतुर्दशस्वयम् ॥ १।४ ॥

प्रसङ्गः—निखिलशास्त्रपारावारपारिणः तपःपूतो महाकविः श्रीहर्षः स्वमहाकाव्यनायकभूतस्य दयादाक्षिण्यादिविविधगुणसंयुतस्य राज्ञो नलस्य सर्वविद्यापारदर्शित्वप्रदर्शनपुरस्सरं चतुर्दशविद्याध्ययनमत्र प्रतिपादयति ।

अन्वयः—अयं चतुर्दशसु विद्यासु अधीतिबोधाचरणप्रचारणैः उपाधिभिः चतस्रः दशाः प्रणयन् स्वयं चतुर्दशत्वं कुतः कृतवान् ? ( इति ) न वेद्मि ।

व्याख्या—अयम्=नलाख्यो महीपतिः, चतुर्दशसु=चतुर्दशसंख्यकासु, विद्यासु=वेदमीमांसान्यायादिविद्यासु, ('अङ्गानि वेदाश्चत्वारो मीमांसा न्यायविस्तरः । धर्मशास्त्रं पुराणं च विद्या ह्येताश्चतुर्दश' विष्णुपुराणे ) अधीतिबोधाचरणप्रचारणैः=अध्ययनार्थावगमतदर्थानुष्ठानप्रसारणैः, उपाधिभिः=भेदैः, चतस्रः=चतुःसंख्यकाः, दशाः=अवस्थाः, प्रणयन्=विदधन्, स्वयं=आत्मना, निजेन वा, चतुर्दशत्वं=चतुर्दशसंख्यकत्वं, कुतः=कस्माद्धेतोः, कृतवान्=अकरोत्, ( इति ) न=नहि, वेद्मि=जानामि ।

अत्र चतुर्दशसंख्यकानां विद्यानां स्वतःसिद्धत्वात् स्वयङ्करणं कथं पिष्टपेषणवदथवा चतुर्दशसंख्यकानां विद्यानां चतुरावृत्तौ सति षट्पञ्चाशता भाव्यम्, कथं चतुर्दशत्वमिति विरोधाभासद्वयमापतति । तस्य 'चतुर्दशसंख्यकानां विद्यानां चतुर्दशत्वम्=चतुरवस्थत्वमित्यर्थकरणात् विरोधपरिहारो भवति । विरोधाभासस्य लक्षणं यथा—'आभासत्वं विरोधस्य विरोधाभास इष्यते' इति । वंशस्थं वृत्तम् ।

समासः—अधीतिश्च बोधश्च आचरणं च प्रचारणं च इति अधीतिबोधाचरणप्रचारणानि, तैः अधीतिबोधाचरणप्रचारणैः । चतुर्दशानां भावः चतुर्दशत्वं, तत् चतुर्दशत्वम् । अथवा चतस्रः दशा यासां ताश्चतुर्दशाः, तासां भावः चतुर्दशत्वम् ।

(४) अमुष्य विद्या रसनाऽग्रनर्तकी त्रयीव नीताऽङ्गगुणेन विस्तरम् ।
अगाहताऽष्टादशतां जिगीषया नवद्वयद्वीपपृथग्जयश्रियाम् ॥
१।५ ॥

प्रसङ्गः—चिन्तामणिमन्त्रचिन्तनाधिगतकवित्वप्रकर्षः सुधीजनसमवायेष्वग्रेसरो महाकविः श्रीहर्षः 'अशेषभूमिपालपुङ्गवो राजा नलः पूर्वोक्ताभिः चतुर्दशसंख्यकाभिः विद्याभिः साकम्—'आयुर्वेद-धनुर्वेद-गान्धर्ववेद-अर्थशास्त्र'श्चेत्येताः चतस्रः विद्याः सम्मेल्याष्टादशसंख्यकान् द्वीपान् जेतुमिच्छयः विद्याया अपि अष्टादशतामभजत्' इति निगदन्नशेषभुवनप्रथितस्य राज्ञो नलस्य परस्परं वैरं भजन्त्यो लक्ष्मीसरस्वत्योरुपरि समानभावेन प्रभुत्वमासीदिति वर्णयत्यत्र ।

अन्वयः—अमुष्य रसनाऽग्रनर्तकी विद्या, त्रयी इव अङ्गगुणेन विस्तरं नीता (सती) नवद्वयद्वीपपृथग्जयश्रियां जिगीषया अष्टादशताम् अगाहत ।

व्याख्या—अमुष्य=पूर्वोक्तस्य नलस्य, रसनाऽग्रनर्तकी=जिह्वाऽग्रसञ्चारिणी, विद्या=पूर्वनिगदिता वेदादिविद्या, सूदविद्या च, रसनाग्रनर्तनधर्मत्वादिति भावः, त्रयी=त्रिवेदी, इव=यथा, अङ्गगुणेन=शिक्षाद्यङ्गावृत्त्या, (शिक्षा कल्पो व्याकरणं निरुक्तं छन्दसां चितिः । ज्योतिषञ्चेति विज्ञेयं षठङ्गं बुधसत्तमैः' इति) विस्तरं=वृद्धिं, नीता=प्रापिता सती, नवद्वयद्वीपपृथग्जयश्रियाम्=अष्टादशद्वीपपृथग्विजयलक्ष्मीनाम्, जिगीषया=जेतुमिच्छया इव, अष्टादशताम्=अष्टादशसंख्यकत्वम्, ('आयुर्वेदो धनुर्वेदो गान्धर्वश्चेति ते त्रयः । अर्थशास्त्रं चतुर्थन्तु विद्या ह्यष्टादश स्मृता' ॥) अगाहत=अभजत । अत्रोपमाप्रतीयमानोत्प्रेक्षालङ्कारयोः संसृष्टिः । वंशस्थवृत्तम् । तल्लक्षणं यथा—'जतौ तु वंशस्थमुदीरितं जरौ' इति ।

समासः—रसनायाः अग्रम् रसनाग्रम्, नृत्यतीति नर्तकी, रसनाऽग्रे नर्तकी रसनाग्रनर्तकी । त्रयः (ऋग्यजुःसामाख्याः, अथवा पद्यगद्यगीतरूपा, अथवा प्रायेण धर्माऽर्थकामरूपाः, अथवा सूदविद्यायाः मधुराम्ललवणकषायकटुतिक्तानां षण्णां रसानां न्यूनाऽधिकसमरूपाः) अवयवा यस्याः सा त्रयी । अङ्गानां गुणः, तेन अङ्गगुणेन । द्वौ अवयवौ यस्य तत् द्वयम्, द्विर्गता आपो यस्मिन् इति द्वीपम्, नवानां द्वयम्, नवद्वयं च ते द्वीपाः, जयस्य श्रियः, नवद्वयद्वीपानां पृथग्जयश्रियः, तासां नवद्वयद्वीपपृथग्जयश्रियाम् । अष्टौ च दश च अष्टादश, अष्टादशानां भावः, ताम् अष्टादशताम् ।

( ५ ) पदैश्चतुर्भिः सुकृते स्थिरीकृते कृतेऽमुना के न तपः प्रपेदिरे ?
भुवं यदेकाङ्घ्रिकनिष्ठया स्पृशन् दधावधर्मोऽपि कृशस्तपस्विताम् ॥ १।७ ॥

प्रसङ्गः—देवताप्रसादाधिगतलब्धवरः कवित्वप्रकर्षान्वितो महाकविः श्रीहर्षः 'राज्ञो नलस्य महीं शासति सति अधर्मोऽपि भुवमेकपदा संस्पृशन् तपश्चकार' इति निगद्यास्मिन् श्लोके कन्दर्पावतारभूतस्य विश्वप्रथितस्य नलस्य प्रभावमत्र चारुतया वर्णयति ।

अन्वयः—अमुना कृते सुकृते चतुर्भिः पदैः स्थिरीकृते (सति) के तपो न प्रपेदिरे ? यत् अधर्मोऽपि अङ्घ्रिकनिष्ठया भुवं स्पृशन् कृशः (सन्) तपस्वितां दधौ ।

व्याख्या—अमुना=राज्ञा नलेन, कृते=सत्ययुगे, सुकृते=धर्मे, चतुर्भिः=चतुःसंख्यकैः, पदैः=चरणैः, तपोज्ञानयज्ञदानरूपैरिति भावः, ( 'तपः परं कृतयुगे त्रेतायां ज्ञानमुच्यते । द्वापरे यज्ञमेवाहुर्दानमेकं कलौ युगे' ॥ इति वचनात् ) स्थिरीकृते=निश्चलीकृते ( सति ), के=जनाः, तपः=चान्द्रायणादिरूपं धर्मानुष्ठानम्, न=नहि, प्रपेदिरे=विहितवन्तः, अपितु सर्वे एव तपश्चेरुरित्याशयः, यत्=यतः, अधर्मोऽपि=धर्मप्रतिकूलतामापन्नोऽधर्मोऽपि, अङ्घ्रिकनिष्ठया=चरणकनिष्ठयाऽङ्गुल्या, भुवम्=पृथ्वीम्, स्पृशन्=स्पर्शं कुर्वन्, कृशः=क्षीणः सन्, तपस्विताम्=तापसत्वं, दीनत्वञ्च, ('मुनिदीनौ तपस्विनौ' इति विश्वः) दधौ=बभार । नलस्य शासनादधर्मोऽपि धर्मेष्वासक्तचित्तोऽभूदित्याशयः ।

'अधर्मोऽपि तपस्वितां दधौ, किमुत अन्यः' इति कथनात् कौमुत्यन्यायादर्थान्तरापत्त्या अर्थापत्तिरलङ्कारः, 'अधर्मोऽपि धार्मिकः' इत्युक्तत्वाद् विरोधालङ्कारः । एतावता द्वयोरलङ्कारयोर्निरपेक्षतया स्थितिः सत्त्वात् संसृष्टिरलङ्कारोऽत्र । वंशस्थवृत्तम् ।

समासः—अस्थिरं स्थिरं यथा सम्पद्यते तथा कृतं स्थिरीकृतम्, तस्मिन् स्थिरीकृते । अङ्घ्रेः कनिष्ठा, तया अङ्घ्रिकनिष्ठया । तपोऽस्याऽस्तीति तपस्वी, तस्य ( तपस्विनः ) भावः, ताम् तपस्विताम् ।

( ६ ) यदस्य यात्रासु बलोद्धतं रजः स्फुरत्प्रतापाऽनलधूममञ्जिम ।
तदेव गत्वा पतितं सुधाऽम्बुधौ दधाति पङ्कीभवदङ्कतां विधौ ॥ १।८ ॥

प्रसङ्गः—कविताकामिनीहर्षप्रकर्षान्वितो महाकविः श्रीहर्षः 'स्वमहाकाव्यनायकभूतस्य नरपतेः नलस्य विजययात्रासु सैन्योत्थापितं रज एव क्षीराम्बुधौ

निपत्य संसर्गवशाच्चन्द्रमसिकलङ्कत्वं समुत्पादयतीति' प्रोच्याम्बुधिपर्यन्तं तस्य शासनमासीदितिव्यञ्जनया प्रतिपादयन् नलस्य प्रतापमत्र वर्णयति ।

अन्वयः—अस्य यात्रासु बलोद्धतं स्फुरत्प्रतापाऽनलधूममञ्जिम यत् रजः तद् एव गत्वा सुधाऽम्बुधौ पतितम् ( अतएव ) पङ्कीभवत् (सत्) विधौ अङ्कतां दधाति ।

व्याख्या—अस्य=पूर्वोक्तस्य नलस्य, यात्रासु=विजयाभियानेषु, बलोद्धतम् सैन्योत्क्षिप्तम्, स्फुरत्प्रतापाऽनलधूममञ्जिम=ज्वलत्तेजोऽग्निधूममनोरमम् ('कान्तं मनोरमं रुच्यं मनोज्ञं मञ्जुमञ्जुलम्' इत्यमरः ), यत् रजः=धूलिः, तद् एव =रेणुरेव, ( 'रेणुर्द्वयोः स्त्रियां धूलिः पांशुर्ना न द्वयोः रजः' इत्यमरः ) गत्वा=व्रजित्वा, उत्क्षेपवेगादित्याशयः, सुधाऽम्बुधौ=क्षीरसागरे, अमृतवारिधौ वा, ( 'पीयूषममृतं सुधा' 'सुधालेपोऽमृतं स्नुही' इत्यमरः ) पतितं=निपतितं सत्, ( अतएव ) पङ्कीभवत्=कर्दमीभवत् (सत्), विधौ=चन्द्रे, सुधाऽम्बुधौ स्थितिः सत्वादिति भावः, अङ्कताम्=कलङ्कत्वम्, ('कलङ्काऽङ्कौ लाञ्छनं च' इत्यमरः ) दधाति=धरति ।

अत्र श्लोकस्य द्वितीये चरणे रूपकोपमालङ्कारौ स्तः । 'पांशुः क्षीरसागरे निपत्य पङ्कीभवच्चन्द्रमसि कलङ्कत्वं धारयति' इत्यस्मिन् स्थले उत्प्रेक्षाव्यञ्जकेवादिशब्दाभावात् प्रतीयमानोत्प्रेक्षा । एतावता एतेषां त्रयाणामलङ्काराणामङ्गाङ्गिभावसत्वात् सङ्करालङ्कारः । वंशस्थं वृत्तम् ।

समासः—बलैः उद्धतं बलोद्धतम् । प्रताप एव अनलः, स्फुरंश्चासौ प्रतापाऽनलः, तस्य धूमः, मञ्जोर्भावो मञ्जिमा, स्फुरत्प्रतापानलस्य धूमः, तस्य इव मञ्जिमा यस्य तत् स्फुरत्प्रतापानलधूममञ्जिम । अम्बूनि धीयन्ते यस्मिन् सः अम्बुधिः, सुधाया अम्बुधिः, तस्मिन् सुधाऽम्बुधौ । अपङ्कं पङ्कं यथा सम्पद्यते तथा भवत् पङ्कीभवन् । अङ्कस्य भावः अङ्कता, ताम् अङ्कताम् ।

( ७ ) निवारितास्तेन महीतलेऽखिले निरीतिभावं गमितेऽतिवृष्टयः ।
न तत्यजुर्नूनमनन्यसंश्रयाः प्रतीपभूपालमृगीदृशां दृशः ॥१।११॥

प्रसङ्गः—कवितार्किको महाकविः श्रीहर्षः 'राज्ञा नलेनाशेषभूमण्डलेऽतिवृष्टयादीतिभावराहित्यं प्रापिते सति, अतिवृष्टयः अन्यत्राश्रयस्थानविरहिताः सत्यः शत्रुभूपालवनितानां लोचनानि न तत्यजु'रिति निगद्याखिलभूमण्डलाधिपतेः नलस्यात्र प्रतापातिशयत्वं दर्शयति ।

अन्वयः—तेन अखिले महीतले निरीतिभावं गमिते निवारिता अतिवृष्टयः अनन्यसंश्रयाः ( सत्यः ) प्रतीपभूपालमृगीदृशां दृशं न तत्यजुः नूनम् ।

व्याख्या—तेन = राजा नलेन, अखिले = अशेषे, महीतले = पृथ्वीतले, निरीतिभावम् = अतिवृष्टयादीतिभावविरहितत्वम् ( 'अतिवृष्टिरनावृष्टिर्मूषकाः शलभाः शुकाः । अत्यासन्नाश्च राजानः षडेता ईतयः स्मृताः' ।। इति ), गमिते = प्रापिते सति, निवारिताः = स्वराज्यात् दूरीकृताः, अतिवृष्टयः = अतिवर्षाणि, अनन्यसंश्रयाः = अपराश्रयविरहिताः ( सत्यः ), प्रतीपभूपालमृगीदृशाम् = अरिमहीपालकान्तानाम्, दृशं = नयनानि, न = नहि, तत्यजुः = जहुः, नूनम् = निश्चयेन, मन्ये इत्यर्थः ।

'मन्ये शङ्के ध्रुवं प्रायो नूनमित्येवमादयः । उत्प्रेक्षावाचकाः शब्दाः इव शब्दोऽपि तादृशः' ।। इत्यनुसारेणं नूनमिति शब्दप्रयोगेण च उत्प्रेक्षालङ्कारः । शत्रुभूपालवनितानामश्रुपातवर्णनात् राज्ञो नलस्यारि महीपतीनां पराजयो व्यज्यते, एतावता पर्यायोक्तालङ्कारोऽत्र, 'पर्यायोक्तं विनावाच्यवाचकत्वेन यद्वचः' इति काव्यप्रकाशलक्षणात् । एवमुभयोरलङ्कारयोरङ्गाङ्गिभावसत्वात् सङ्करः । वंशस्थवृत्तम् ।

समासः—मह्यास्तलं महीतलम्, तस्मिन् महीतले । निर्गता ईतयो यस्मिस्तत्, निरीतिनो भावः, तम् निरीतिभावम् । अन्यस्य संश्रयः अन्यसंश्रयः, अविद्यमानः अन्यसंश्रयः यासां ताः अनन्यसंश्रयाः । प्रतिकूला आपो येषु ते प्रतीपाः, भुवं पालयन्तीतिभूपालाः, प्रतीपाश्च ते भूपालाः, मृग्या इव दृशौ यासां ताः मृगीदृशः, प्रतीपभूपालानां मृगीदृशः, तासां प्रतीपभूपालमृगीदृशाम् ।

( ८ ) सिताऽशुवर्णैर्वयति स्म तद्गुणैर्महाऽसिवेम्नः सहकृत्वरी बहुम् ।
दिगङ्गनाऽङ्गाभरणं रणाङ्गणे यशः परं तद्भटचातुरी तुरी ॥
१।१२ ॥

प्रसङ्गः—चिन्तामणिमन्त्रचिन्तनाधिगतकवित्वप्रकर्षो महाकविः श्रीहर्षः 'राज्ञो नलस्य भटानां चातुरीरूपात्मिका तुरी विशालखड्गरूपवायदण्डस्य सहकारेण समराङ्गणे शुभ्रवर्णैः नलशौर्यादिगुणरूपतन्तुभिः दिक्कान्तानामङ्गभूषणार्थं प्रचुरं कीर्तिवसनं विनिर्मितवती' इति प्रोच्य 'भूपतिना नलेनाजौ तथा नैपुण्यं प्रकटितं यथा तेन सर्वा दिशो यशसा प्रपूरिता' इति व्यञ्जनया प्रतिपादयन् स्वमहाकाव्यनायकभूतस्य नरपतेः नलस्य प्रतापातिशयत्वमत्र वर्णयति ।

**अन्वयः**—तद्भटचातुरी तुरी महाऽसिवेम्नः सहकृत्वरी रणाङ्गणे सितांऽशुवर्णैः तद्गुणैः दिगङ्गनाऽङ्गाभरणं बहुं यशःपटं वयति स्म ।

**व्याख्या**—तद्भटचातुरी=नलसैनिकनिपुणता, तुरी=सूत्रवेष्टननलिका, वयनसाधनं वस्तुविशेषो वा, महाऽसिवेम्नः=विशालकरवालवायदण्डस्य ('खड्गे तु निस्त्रिंशचन्द्रहासासिरिष्टयः । कौक्षेयको मण्डलाग्रः करवालः कृपाणवत्' 'पुंसिवेमा वायदण्डः' इत्यमरः) सहकृत्वरी=सहकारिणी ( सती ) रणाऽङ्गणे=समरचत्वरे ( 'अङ्गणं चत्वराऽजिरे' इत्यमरः ), सिताशुवर्णैः—चन्द्रसदृशधवलवर्णैः, तद्गुणैः=नलशौर्यादिगुणरूपैः तन्तुभिः, दिगङ्गनाऽङ्गाभरणम् =दिग्वनितावयवभूषणम्, बहुं=प्रचुरं, यशः पटं=कीर्तिवसनं, वयति स्म= रचयति स्म ।

अस्मिन् श्लोके 'सितांऽशुवर्णैः' इत्यत्रोपमा, अन्यत्र च रूपकालङ्कारोऽस्ति । एतावता द्वयोरङ्गाङ्गिभावसत्वात् सङ्करः । वंशस्थ वृत्तम् ।

**समासः**—तस्य भटाः तद्भटाः, चतुरस्य भावश्चातुरी, तद्भटानां चातुरी तद्भटचातुरी । महांश्चाऽसौ असिः महाऽसिः, महाऽसिरेव वेमा, तस्य महाऽसिवेम्नः । सह कृतवती इति सह कृत्वरी । रणस्य अङ्गणम्, तस्मिन् रणाऽङ्गणे । सिता अंशवो यस्य स सितांऽशुः, सितांऽशोरिव वर्णो येषां ते, तैः सितांशुवर्णैः । तस्य गुणाः, तैः तद्गुणैः । दिश एव अङ्गना दिगङ्गनाः, तासाम् अङ्गानि, तेषाम् आभरणम् दिगङ्गनाऽङ्गाभरणम् । यशः एव पटम्, तम् यशःपटम् ।

( ९ ) प्रतीपभूपैरिव किं ततो भिया विरुद्धधर्मैरपि भेत्तृतोज्झिता ।
अमित्रजिन्मित्रजिदोजसा स यद्विचारदृक्चारदृगप्यवर्तत ॥
११३ ॥

**प्रसङ्गः**—विद्वद्वरेण्यो महाकविः श्रीहर्षः 'भास्करसमदीप्यमानं चारदृशञ्च नृपं नलं विज्ञाय तस्य रिपवो भयात् परस्परोपजापादिवैरभावं परित्यक्तवन्तः' इति निगद्य नरपतेः नलस्याप्रतिमं प्रतापं प्रकारान्तरेण द्रढयति ।

**अन्वयः**—प्रतीपभूपैः इव विरुद्धधर्मैः अपि ततो भिया भेतृता उज्झिता किम् ? यत् स ओजसा अमित्रजित्, मित्रजित् विचारदृक् अपि चारदृक् अवर्तत ।

**व्याख्या**—प्रतीपभूपैः=प्रतिकूलवर्तिमहीपतिभिः, इव=यथा, विरुद्धधर्मैः अपि=परस्परासमानाधिकरणविरोधिधर्मैरपि, ततः=नलात्, भयात्=भीत्या, भेत्तृता=परस्परभेदनकारिता, भेदज्ञापकता वा, उज्झिता किम् !=परित्यक्ता

किम् ? यत्=यतः, सः=नलाख्यो नृपः, ओजसा=तेजसा; अमित्रजित्
रिपुजेता ( 'रिपौ वैरिसपत्नारिद्विषद्द्वेषणदुर्हृदः । द्विड्विपक्षाहितामित्र
शात्रवशत्रवः' इत्यमरः ), मित्रजिद्=रविजेता, ( 'अथ मित्रं सखा सु
'मित्रो रवावपि' इत्यमरः ) विचारदृक् अपि=विचारपूर्वकं द्रष्टा, चारदृक्
गुप्तचरलोचनः, अवर्तत=आसीत् ।

अस्मिन् श्लोके 'अमित्रजित्=मित्रजिद्भिन्नः, परं मित्रजित्=मित्र
इत्यर्थकरणेन विरोधः प्रतीयते, तत्परिहारस्तु—ओजसा=प्रतापेन, अमित्र
=शत्रुजेता, ओजसा=तेजसा, मित्रजित्=सूर्यजेता' इत्यर्थस्वीकरणेन वि
तव्यः । एवमेव यः 'विचारदृक्=चारदृग्भिन्नः, स कथं चारदृक् ?' इति विर
प्रतिभाति, परं तत्परिहारोऽपि 'विचारदृक्=विचारपूर्वकं द्रष्टा, चारदृक्
गूढ़पुरुषनेत्रः' इत्येवमर्थविधानेन 'राजानश्चारचक्षुषः' इति सिद्धान्ताच्च सुधी
स्वीकरणीयः ।

इत्थमत्र 'प्रतीपभूपैरिव' इत्युपमा, 'अमित्रजित् मित्रजित्' 'विचार
चारदृक्' इत्यत्र विरोधाभासः, 'किम्' शब्देन चोत्प्रेक्षालङ्कारो व्यज्यते ।
त्रयाणामलङ्काराणामङ्गाङ्गिभावसत्वात् सङ्करालङ्कारोऽत्र । वंशस्थं वृत्तम् ।

समासः—प्रतीपाश्च ते भूपाः, तैः प्रतीपभूपैः । विरुद्धाश्च ते धर्माः,
विरुद्धधर्मैः । अमित्रान्=शत्रून् जयतीति अमित्रजित् । मित्रं=सूर्यं जयतीति मि
जित् । विचारपूर्वकं पश्यतीति विचारदृक् । चारा एव दृशो यस्य सः चारदृ

( १० ) अयं दरिद्रो भवितेति वैधसीं लिपिं ललाटेऽर्थिजनस्य जाग्रती
मृषा न चक्रेऽल्पितकल्पपादपः प्रणीय दारिद्र्यदरिद्रतां नृपः
१।१५

प्रसङ्गः—कविताकामिनी हर्षप्रकर्षान्वितो महाकविः श्रीहर्षः 'कल्पप
पातिशायिभूपालो नलः याचकजनेभ्यः प्रभूतं धनं प्रदायार्थिजनानां कृते '
निःस्वो भविष्यती'ति ब्रह्मसम्बन्धिनीं लिपिं तेषां धनाभावमपनीयमपि मृष
चकार' इति समुपवर्ण्य राज्ञो नलस्य दानशीलतायाः पराकाष्ठां सन्दर्शयन्
वदान्यतामत्र वर्णयति ।

अन्वयः—अल्पितकल्पपादपः नृपः अर्थिजनस्य ललाटे 'अयं दरिद्रो भवि
इति जाग्रतीं वैधसीं लिपिं दारिद्र्य-दरिद्रतां प्रणीय मृषा न चक्रे ।

व्याख्या—अल्पितकल्पपादपः=अल्पीकृत वाञ्छितफलप्रदविटपः, नृपः
भूपालो नलः, अर्थिजनस्य=याचकजनस्य, ललाटे=भाले, 'अयं=एष ज

दरिद्रः=निःस्वः, अभाववानिति भावः, भविता=भविष्यति' इति=इत्थं जाग्रतीम्=दीप्यमानाम् वेधसीं=ब्रह्मसम्बन्धिनीं, लिपिं=रेखां, वर्णावलीं वा, दारिद्र्यदरिद्रतां=दरिद्रताऽभावं, प्रभूतधनप्रदानेनेत्याशयः, प्रणीय=विधाय, मृषा=मिथ्या, न=नहि, चक्रे=विहितवान्। 'ब्रह्मणः लिपौ सामान्यतः दरिद्र-शब्दस्य विद्यमानतायां, दरिद्रशब्दस्य च 'धनदरिद्रः, पापदरिद्रः, ज्ञानदरिद्रः' इत्यादिप्रयोगबाहुल्य दर्शनात् 'धनदरिद्रः' इति शब्दस्याभावमात्र बोधकत्व-मङ्गीकृत्य प्रचुरधनप्रदानेन याचकानां दारिद्र्यं दूरीचकार' इति तात्पर्यार्थः।

अस्मिन् श्लोके 'अल्पितकल्पपादपः' इत्यत्रोपमानभूतकल्पपादपादुपमेयस्य नलस्याधिक्यवर्णनाद् व्यतिरेकालङ्कारः। वंशस्थवृत्तम्।

समासः—अल्पः कृतः अल्पितः, कल्पः=सङ्कल्पिताऽर्थः पूरकः पादप कल्प-पादपः, अल्पितः कल्पपादपो येन सः अल्पितकल्पपादपः। असन्निहितः अर्थः अस्याऽस्तीति अर्थी, अर्थी चासौ जनः, तस्य अर्थिजनस्य। जागर्तीति जाग्रती, ताम् जाग्रतीम्। वे[illegible] इयं वैधसी, ताम् वैधसीम्। दरिद्रस्य भावः कर्म वा दारिद्र्यम्, दरिद्रस्य भावो दरिद्रता, दारिद्र्यस्य दरिद्रता, ताम् दारिद्र्य दरिद्रताम्।

(११) विभज्य मेरुर्न यदर्थिसात्कृतो
न सिन्धुरुत्सर्गजलव्ययैर्मरुः।
अमानि तत्तेन निजाऽयशोयुगं
द्विफालबद्धाश्चिकुराः शिरःस्थितम्॥ १।१६॥

प्रसङ्गः—कविव्रातेषु वरेण्यो महाकविः श्रीहर्षः 'सुमेरोरचलस्य खण्डं विधाय याचकेभ्यो न प्रदत्तवान्, वारिधेः जलं दानप्रदानकाले उदकव्ययेन समाप्तिर्नागात्, अस्माद्धेतोः पुण्यश्लोको नलः स्वशिरसि भागद्वयेषु विभज्य संग्र-थितान् निजकचान् कार्ष्ण्यात् कलङ्करूपेणामन्यत' इति निगदन् महाकाव्यस्यास्य नायकस्य राज्ञो नलस्य दानशीलतायाः प्रतापस्य च प्रकारान्तरेण वर्णनं विदधात्यत्र।

अन्वयः—विभज्य मेरुः यत् अर्थिसात् न कृतः, उत्सर्गजलव्ययैः सिन्धुः यत् मरुः न कृतः, तत् तेन द्विफालबद्धाः चिकुराः शिरःस्थितं निजाऽयशोयुगम् अमानि।

व्याख्या—विभज्य=विभक्तीकृत्य, खण्डशो विधायेत्याशयः, मेरुः=सुमेरु-शैलः ('मेरु सुमेरुर्हेमाद्री रत्नसानुः सुरालयः' इत्यमरः) यत्=यस्माद्धेतोः,

अर्थिसात्=याचकजनाऽधीनः, न=नहि, कृतः=विहितः, उत्सर्गजलव्ययैः=दानोदकोपयोगैः, सिन्धुः=सागरः, यत्=येन हेतुना, मरुः=धन्वा, निर्जल प्रदेश इत्याशयः ( 'समानौ मरुधन्वानौ' इत्यमरः ), न कृतः=न विहितः, तत् =तस्मान्निमित्तद्वयात्, तेन=राज्ञा नलेन, द्विफालबद्धाः=द्विभागनद्धाः, चिकुराः =कचाः, ( 'चिकुरः कुन्तलो बालः कचः केशः शिरोरुहः' इत्यमरः ) उद्देश्य वाचकं पदमिदम्, शिरःस्थितं=निजमस्तकधृतं, निजाऽयशोयुगं=स्वापकीर्ति द्वयं, विधेयवाचकं पदमिदम्, अमानि=विचारितम् । उद्देश्यवाचकं 'चिकुराः' इति पदस्य बहुवचनान्ते सत्यपि विधेयवाचकपदं 'निजाऽयशोयुगम्' इत्यस्यैक वचनान्ते सति विधेयप्राधान्यात् क्रियायामेकवचनं विद्यते ।

अस्मिन् श्लोके 'मेरु' 'मरु' इति द्वयोरप्रस्तुतपदयोः कर्मतायाः सम्बन्ध सत्वात् तुल्ययोगितालङ्कारः । तल्लक्षणं यथा—'पदार्थानां प्रस्तुतानामन्येषां वा यदा भवेत् । एक धर्माऽभिसम्वन्धः स्यात्तदा तुल्ययोगिता' ।। ( सा. द. ) इति । कचेषु कृष्णतायाः साम्येनायशः आरोपात् रूपकालङ्कारश्चापि । इ तुल्ययोगिता रूपकयोः निरपेक्षतया स्थितिः सत्वात् संसृष्टिरलङ्कारोऽत्र वंशस्थवृत्तम् ।

समासः—उत्सर्गस्य जलम्, तस्य व्ययाः, तैः उत्सर्गजलव्ययैः । द्वयोः फालयोः बद्धाः द्विफालबद्धाः । शिरसि स्थितं शिरःस्थितम् । न यशसी, अयशसोर्युगम्, निजं च तत् अयशोयुगम्, निजाऽयशोयुगम् ।

( १२ ) अजस्रमभ्यासमुपेयुषा समं मुदैव देवः कविना बुधेन च ।
दधौ पटीयान्समयं नयन्नयं दिनेश्वरश्रीरुदयं दिने दिने ।। १।१६।

प्रसङ्गः—कवितार्किको महाकविः श्रीहर्षः 'यथा भुवनप्रथितो भगवान् भास्करः स्वसमीपवर्तिना शुक्रेण बुधेन च साकं हर्षेण समयं यापयन् प्रतिदिन मुदयाचलमुपैति, तथैवादित्यकान्तिनिभो बुधजनप्रियो नलः काव्यकर्त्रा विदुषा च समं मुदा कालक्षेपं विदधन् प्रत्यहमभ्युन्नतिमधिगच्छति स्म' इति निगदन् नरपतिना नलेन विहितं विद्वज्जनसम्मानमत्र वर्णयति ।

अन्वयः—पटीयान् दिनेश्वरश्रीः अयं देवः अजस्रम् अभ्यासम् उपेयुषा कविना बुधेन च समं मुदा एव समयं नयन् दिने दिने उदयं दधौ ।

व्याख्या—पटीयान्=कर्मणि कुशलः, दिनेश्वरश्रीः=आदित्यसमतेजाः, अयं=एषः, देवः=राजानलः, सूर्यश्च ( 'देवः सूर्ये यमे राज्ञि' इति विश्वः )

अजस्रम्=सततम्, अभ्यासम्=अन्तिकम् ('समीपे निकटासन्नसन्निकृष्ट-सनीडवत्। सदेशाभ्याशसविधसमर्यादसवेशवत्॥ उपकण्ठान्तिकाभ्यर्णाभ्यग्रा अप्यभितोऽव्ययम्' इत्यमरः), उपेयुषा=प्राप्तवता, कविना=काव्यकर्त्रा, शुक्रेण ('उशना भार्गवः कविः' 'संख्यावान् पण्डितः कविः' इत्यमरः), बुधेन=पण्डितेन, चन्द्रात्मजबुधाख्य ग्रहेण च ('रौहिणेयो बुधः सौम्यः' 'सन्सुधी कोविदो बुधः' इत्यमरः), समम्=साकम्, मुदा=हर्षेण, एव=निश्चयेन, समयं=कालं, नयन्=यापयन्, दिने दिने=प्रत्यहम्, उदयम्=अभ्युन्नतिम्, उदयाचलम्, दधौ=धारयामास। 'दिनेश्वरश्रीः' इत्यत्रोपमा, 'कविना' 'बुधेन' इत्युभयत्र श्लेषालङ्कारः। इत्थमुपमाश्लेषालङ्कारयोर्निरपेक्षतया स्थितिः त्वात् संसृष्टिरलङ्कारोऽत्र। वंशस्थवृत्तम्।

समासः—अतिशयेन पटुः, इति पटीयान्। दिनस्य ईश्वरः, तस्य श्रीरिव श्रीर्यस्य सः दिनेश्वरश्रीः।

(१३) जगज्जयं तेन च कोशमक्षयं प्रणीतवाञ्शैशवशेषवानयम्।
सखा रतीशस्य ऋतुर्यथा वनं वपुस्तथाऽऽलिङ्गदथाऽस्य यौवनम्॥ १।१९॥

प्रसङ्गः—चिन्तामणिमन्त्रचिन्तनाधिगतकवित्वप्रकर्षः तपःपूतो महाकविः श्रीहर्षः 'बाल्याऽवशेषयुतः सन्नेव नरपतिपुङ्गवो नलः विश्वविजयं विधाय निजकोशं परिपूर्णं विहितवान्। तदनु मकरध्वजस्य मित्रं वसन्ततुः वनमिव क्रमेण यौवनं नलवपुषि पदं निहितवान्।' इति निगद्य महाकाव्यस्यास्य नायकस्य नलस्य तारुण्योपगमं वर्णयत्यत्र।

अन्वयः—शैशवशेषवान् अयं जगज्जयं (प्रणीतवान्), तेन च कोशम् अक्षयं प्रणीतवान्। अथ रतीशस्य सखा ऋतुः यथा वनं, तथा यौवनम् अस्य वपुः आलिङ्गत्।

व्याख्या—शैशवशेषवान्=ईषदवशिष्टशैशवः, अयं=वर्ण्यमानो नलः, जगज्जयं=भुवनविजयं (प्रणीतवान्=कृतवान्), तेन च=विश्वविजयेन च, कोषम्=भाण्डारभवनम्, अक्षयम्=क्षयरहितम्, परिपूर्णमित्याशयः, प्रणीतवान्=विहितवान्। अथ=बाल्यावस्थापगमानन्तरम्, रतीशस्य=रतिस्वामिनो मन्मथस्य, सखा=मित्रम्, ऋतुः=वसन्तर्तुः, यथा=यया रीत्या, वनम्=उपवनम्, आलिङ्गतीति शेषः, तथा=तया रीत्या, यौवनम्=तारुण्यम्, अस्य=नलस्य, वपुः=शरीरम्, आलिङ्गत्=संश्लिष्टवत्। राज्ञो नलस्य शरीरे यौवन-प्रादुर्भावः सञ्जात इत्याशयः। उपमालङ्कारोऽत्र। वंशस्थवृत्तम्।

समासः—शिशोर्भावः शैशवम् । जगतां जयः, तम् जगज्जयम् । अविद्यमानः क्षयो यस्य, तम् अक्षयम् । रतेः ईशः तस्य रतीशस्य । यूनः भावः यौवनम् ।

(१४) अधारि पद्मेषु तदङ्घ्रिणा घृणा क्व तच्छयच्छायलवोऽपि पल्लवे ।
तदास्यदास्येऽपि गतोऽधिकारितां न शारदः पार्विकशर्वरीश्वरः ॥
१।२०

प्रसङ्गः—कविपुङ्गवो महाकविः श्रीहर्षः 'नलचरणेन पङ्कजेषु जुगुप्सा धृता, नवपल्लवे नलपाणिकान्तिलेशोऽपि नासीत्, षोडशकलायुतः पूर्णिमाचन्द्रः नलमुखदासभावेऽप्यर्हतां नाधिगतवान्' इति प्रोच्य राज्ञो नलस्य पाणिपादवदनादीनामनौपम्यं संदर्शयन् तच्छरीरवर्णनमत्रारभते ।

अन्वयः—तदङ्घ्रिणा पद्मेषु घृणा अधारि, तच्छयछायलवोऽपि पल्लवे क्व ? शारदः पार्विकशर्वरीश्वरः तदास्यदास्ये अपि अधिकारितां न गतः ।

व्याख्या—तदङ्घ्रिणा=नलचरणेन, पद्मेषु=पङ्कजेषु, घृणा=जुगुप्सा अधारि=धृता, तच्छयछायलवोऽपि=नलहस्तकान्तिलेशोऽपि, ( 'पञ्चशाखः शयः पाणिः' इत्यमरः ), पल्लवे=नवकिसलये, क्व ?=कुत्र ?, शारदः=शरत्कालीनः, पार्विकशर्वरीश्वरः=षोडशकलायुतः पूर्णिमाचन्द्रः, तदास्यदास्ये अपि=नलवदनकैङ्कर्ये अपि, अधिकारिताम्=अर्हताम्, न=नहि, गतः=प्राप्तः । अङ्घ्र्यादीनां पद्मादिषु घृणाद्यसम्भवेऽपि सम्बन्धोक्तेरतिशयोक्तिरलङ्कारोऽत्र । वंशस्थवृत्तम् ।

समासः—तस्य अङ्घ्रि, तेन तदङ्घ्रिणा । तस्य शयः तच्छयः, तच्छयस्य छाया तच्छयछायम्, तस्य लवः इति तच्छयछायलवोऽपि । शरदि भवः शारदः पर्वणि भवः पार्विकः, शर्वर्याः ईश्वरः, पार्विकश्चासौ शर्वरीश्वरः । तस्य आस्यम् तदास्यम्, दासस्य भावो दास्यम्, तदास्यस्य दास्यम्, तस्मिन् तदास्यदास्ये अधिकरोतीति तच्छीलः अधिकारी, अधिकारिणो भावः, ताम् अधिकारिताम् ।

(१५) किमस्य रोम्णां कपटेन कोटिभिर्विधिर्न लेखाभिरजीगणद् गुणान् ।
न रोमकूपौघमिषाज्जगत्कृता कृताश्च किं दूषणशून्यबिन्दवः ॥
१।२१

प्रसङ्गः—विद्वद्वरेण्यो महाकविः श्रीहर्षः 'जगत्स्रष्टा विधाता राज्ञो नलस्य शौर्यौदार्यसौन्दर्यादीन् गुणान् रोम्णां व्याजेन गणितवान्, अथ च रोमकूपव्याजेन

विमिषात् लोकसृजा विधात्रा दूषणशून्यबिन्दवः विहिताः' इति निगद्य राज्ञि नले णानां वाहुल्यं दोषाणां सुतरामभावश्चात्र सन्दर्शयति ।

अन्वयः—विधिः रोम्णां कपटेन कोटिभिः लेखाभिः अस्य गुणान् किं न जीगणत् ? जगत्कृता रोमकूपौघमिषात् दूषणशून्यबिन्दवश्च किं न कृता ?

व्याख्या—विधिः=जगत्स्रष्टा विधाता, रोम्णाम्=लोम्नाम्, कपटेन= याजेन, कोटिभिः=सार्धत्रिकोटिसंख्याभिः, ( 'तिस्रः कोटयोऽर्द्धकोटी च यानि मेमाणि मानुषे' इति वचनात् ), लेखाभिः=रेखाभिः, अस्य=राज्ञो नलस्य, णान्=शौर्यादीन्, किं न अजीगणत्=किं न गणितवान् ? अपि तु गणित- ानेवेति भावः, ( तथैव ) जगत्कृता=विधिना, रोमकूपौघमिषात्=लोमकूप- सूहव्याजात्, दूषणशून्यबिन्दवः=दोषाभावज्ञापकचिह्नभूतपृषताः, किं न कृताः =किं न विहिताः, अपितु विहिता एव, राज्ञि नले गुणा एव सन्ति, दोषाणां तरामभाव एवेति द्योत्यते । अस्मिन् श्लोकेऽपह्नुतिरर्थापत्तिरलङ्कारयोः सृष्टिः । वंशस्थवृत्तम् ।

समासः—जगत् करोतीति जगत्कृत्, तेन जगत्कृता । रोम्णां कूपाः, तेषा- मोघः, तस्य मिषं, तस्मात् रोमकूपौघमिषात् । दूषणानां शून्यानि, तत्सूचका न्दवः इति दूषणशून्यबिन्दवः ।

( १६ ) अमुष्य दोर्भ्यामरिदुर्गलुण्ठने ध्रुवं गृहीताऽर्गलदीर्घपीनता ।
उरः श्रिया तत्र च गोपुरस्फुरत्कपाटदुर्धर्षतिरःप्रसारिता ॥
१।२२ ॥

प्रसङ्गः—कवितार्किको महाकविः श्रीहर्षः राज्ञो नलस्य शरीरवर्णन- सङ्गेऽत्र भुजयोः वक्षःस्थलस्य च वर्णनं चारुतया विदधाति ।

अन्वयः—अमुष्य दोर्भ्याम् अरिदुर्गलुण्ठने अर्गलदीर्घपीनता गृहीता ध्रुवम् । त्र उरःश्रिया च गोपुरस्फुरत्कपाटदुर्धर्षतिरःप्रसारिता ( गृहीता ध्रुवम् ) ।

व्याख्या—अमुष्य=राज्ञो नलस्य, दोर्भ्याम्=भुजाभ्याम्, अरिदुर्गलुण्ठने= रिपुदुर्गभञ्जने, अर्गलदीर्घपीनता=कपाटविष्कम्भकदारुविशेषायतपीवरत्वम् 'तद्विष्कम्भोऽर्गलं न ना' इत्यमरः ), गृहीता ध्रुवम्=अवलम्बिता किम् ?, त्र=शत्रुदुर्गभञ्जने, उरःश्रिया च=वक्षःस्थललक्ष्म्या, गोपुरस्फुरत्कपाट- दुर्धर्षतिरःप्रसारिता=पुरद्वारविद्योतमानकपाटाऽधृष्यत्वं, तिर्य्यक्प्रसारित्वञ्च, गृहीता ध्रुवम्=उपात्ता किम् । ) अस्मिन् श्लोके द्वयोरुत्प्रेक्षालङ्कारयोर्निर- क्षतया स्थितिःसत्वात् संसृष्टिरलङ्कारः । वंशस्थवृत्तम् ।

**समासः**—अरीणां दुर्गाणि, तेषां लुण्ठनं, तस्मिन् अरिदुर्गलुण्ठने। दीर्घं तत्पीनश्च, तस्य भावः, अर्गलस्य दीर्घपीनता, अर्गलदीर्घपीनता, उरसः श्री तया उरःश्रिया। स्फुरच्च तत्कपाटम्, गोपुरे स्फुरत्कपाटम्, दुःखेन धर्षि शक्यं दुर्धर्षम्, तिरः प्रसरतीति तच्छीलं तिरःप्रसारि, दुर्धर्षं च तत् तिर प्रसारि, तस्य भावः, गोपुरस्फुरत्कपाटस्य दुर्धर्षतिरःप्रसारिता इति गोपु स्फुरत्कपाटदुर्धर्षतिरःप्रसारिता।

( १७ ) सरोरुहं तस्य दृशैव तर्जितं जिता स्मितेनैव विधोरपि श्रियः
कुतः परं भव्यमहो महीयसी तदाननस्योपमितौ दरिद्रता।
।१२४।

**प्रसङ्गः**—कविनिवहेष्वग्रेसरो महाकविः श्रीहर्षः 'इह जगति चन्द्रा विन्दाभ्यां भिन्नमन्यत् किमपि भव्यं ( नास्ति ), एतावता नलाननस्योपमि महती दरिद्रता विद्यत' इति प्रोच्य प्रकारान्तरेण नलमुखस्य निरौपम सन्दर्शयत्यत्र।

**अन्वयः**—तस्य दृशा एव सरोरुहं तर्जितम्, ( तस्य ) स्मितेन विधोः अ श्रियः जिताः, ( आभ्याम् ) परं भव्यं कुतः। अहो! तदाननस्य उपमितौ मही यसी दरिद्रता।

**व्याख्या**—तस्य=नलाननस्य, दृशा एव=लोचनेनैव, सरोरुहम्=अर विन्दम्, तर्जितम्=न्यक्कृतम्, ( तस्य=नलस्य ) स्मितेन=ईषद्धास्येन विधोः अपि=चन्द्रस्यापि, श्रियः=कान्तयः, जिताः=विजिताः, तिरस्कृता इति भावः, ( आभ्याम्=चन्द्रारविन्दाभ्याम् ) परम्=अन्यत्, भव्यम्=रम वस्तु, कुतः=कस्मात्, न कुत्रापि वर्तत इति भावः, अहो=आश्चर्यम्, ( 'अहं ही च विस्मये' इत्यमरः ) तदाननस्य=नलवदनस्य, उपमितौ=तुलनाया महीयसी=अतिमहती, दरिद्रता=अभावः, कवीनां कृते विद्यत इत्याशयः अस्मिन् श्लोके व्यतिरेक-काव्यलिङ्गालङ्कारयोर्निरपेक्षतया स्थितिसत्वा संसृष्टिरलङ्कारः। वंशस्थवृत्तम्।

**समासः**—सरसि रोहतीति सरोरुहम्, तस्य अनानम् तदाननम्, तस तदाननस्य। अतिशयेन महती महीयसी। दरिद्रस्य भावः दरिद्रता।

( १८ ) स्वबालभारस्य तदुत्तमाऽङ्गजैः समं चमर्येव तुलाऽभिलाषिणः।
अनागसे शंसति बालचापलं पुनः पुनः पुच्छविचोलनच्छलात्॥
।१२५।

प्रसङ्गः—कवित्वप्रकर्षसमन्वितो महाकविः श्रीहर्षः राज्ञो नलस्य सौन्दर्य-वर्णनप्रसङ्गे तस्य चिकुराणां सर्वातिशायिमनोहारित्वमत्र वर्णयति ।

अन्वयः—चमरी एव तदुत्तमाऽङ्गजैः समं तुलाभिलाषिणः स्ववालभारस्य अनागसे पुनः पुनः पुच्छविलोलनच्छलात् बालचापलं शंसति ।

व्याख्या—चमरी एव='चमरी' इत्याख्यमृगीविशेष एव, तदुत्तमाऽङ्गजैः=नलशिरोरुहैः, समम्=साकम्, तुलाभिलाषिणः=साम्यकाङ्क्षिणः, स्ववाल-भारस्य=निजकचनिकरस्य, अनागसे=अनपराधायः, पुनः पुनः=मुहुः मुहुः, पुच्छविलोलनच्छलात्=लाङ्गूलविचालनव्याजात्, वालचापलम्=रोमचाञ्च-ल्यम्=शिशुचाञ्चल्यं वा, शंसति=कथयति, सूचयतीति भावः। यथा जननी महापुरुषैः साकं संघर्षरतस्य स्वात्मजस्यापराधाऽभावसंसूचनाय 'नैतेन बुद्धि-पूर्वकमेतदाचरितम्, बालत्वान्मूर्खत्वादेवेत्थं विहितम्' इति निगदति, तथैव चमरी अपि नलकचैः साकं साम्यमभिलषतः स्वकेशनिवहस्यानपराधाय पुच्छ-सञ्चालनव्याजात् चापलमिदं बालत्वेन विहितमिति सूचयतीत्याशयः। पुच्छ-विलोलनप्रतिषेधेन अन्यस्य बालचापलस्य स्थापनादह्नुतिरलङ्कारोऽत्र। तल्लक्षणं यथा—'प्रकृतं प्रतिषिध्यान्यस्थापनं स्यादपह्नुतिः' ( सा. द. ) इति। 'वाल-चापलम्' इत्यस्मिन्नंशेऽर्थद्वयात् श्लेषालङ्कारोऽपि। एतावता द्वयोरलङ्कारयोः सङ्करः। वंशस्थवृत्तम्।

समासः—उत्तमं च तत् अङ्गम् उत्तमाङ्गम्, उत्तमाङ्गे जाताः, तैः उत्तमाऽङ्गजैः। तुलाम् अभिलषतीति तच्छीलः, तस्य तुलाभिलाषिणः। स्वस्य वालाः, तेषां भारः, तस्य स्ववालभारस्य। न आगः अनागः, तस्मै अनागसे। पुच्छस्य विलोलनम्, तस्य छलम्, तस्मात् पुच्छविलोलनच्छलात् बालानां चापलम् बालचापलम्।

(१९) महीभृतस्तस्य च मन्मथश्रिया निजस्य चितस्य च तं प्रतीच्छया।
द्विधा नृपे तत्र जगत्त्रयीभुवां नतभ्रुवां मन्मथविभ्रमोऽभवत्॥
१।२६॥

प्रसङ्गः—महाकाव्यस्यास्य प्रणेता महाकविः श्रीहर्षः 'त्रिभुवनवर्त्तिनीनां वनितानां परमसुषमयान्वितेन हेतुना नरपतिपुङ्गवं राजानं नलं प्रति द्विधा मन्मथविभ्रमो (अयं कामदेव इति कामविलासश्च) अभवत्' इति समुपवर्ण्य मन्मथकल्पस्य महीपतेः नलस्य सौन्दर्यातिशयत्वमत्र सन्दर्शयति।

अन्वयः—तस्य महीभृतः मन्मथश्रिया तं प्रति निजस्य चित्तस्य इच्छया च तत्र नृपे जगत्त्रयीभुवां नतभ्रुवां द्विधा मन्मथविभ्रमः अभवत् ।

व्याख्या—तस्य=पूर्वनिगदितस्य, महीभृतः=राज्ञो नलस्य, मन्मथश्रिया =कन्दर्पसंकाशसुषमया, तं प्रति=राजानं नलं प्रति, निजस्य=स्वस्य, =मनसः, इच्छया=कामनया, च तत्र=तस्मिन्, नृपे=भूपतौ, जगत्त्रयी-भुवाम्=लोकत्रितयजनितानाम्, नतभ्रुवाम्=वनितानाम् द्विधा=द्विप्रकारेण, मन्मथविभ्रमः=कामदेवभ्रान्तिः, कामविलासश्च, अभवत्=अभूत् ।

लोकत्रितयोत्पन्नासु वनितासु द्वयोः मन्मथयोः स्थितिरसत्वात् तादृग्भ्रमस्य सम्बन्धस्य चोक्तेरतिशयोक्तिरलङ्कारः, 'मन्मथविभ्रमः' इत्यस्मिन् पदे-श्लेषालङ्कारश्च । एतावता द्वयोरलङ्कारयोर्निरपेक्षतया स्थितिसत्वात् संसृष्टि-रलङ्कारोऽत्र । वंशस्थवृत्तम् ।

समासः—महीं बिभर्तीति महीभृत्, तस्य महीभृतः । मन्मथस्य श्रीः, तया मन्मथश्रिया । जगतां त्रयी, तस्यां भवन्तीति जगत्त्रयीभुवः, तासां जगत्त्रयी-भुवाम् । नते भ्रुवौ यासां ता नतभ्रुवः, तासाम् नतभ्रुवाम् । मन्मथस्य विभ्रमः मन्मथविभ्रमः ।

( २० ) न का निशि स्वप्नगतं ददर्श तं
जगाद गोत्रस्खलिते च का न तम् ।
तदात्मताध्यातधवा रते च का
चकार वा न स्वमनोभवोद्भवम् ।। १।३० ।।

प्रसङ्गः—कविपुङ्गवो महाकविः श्रीहर्षोऽत्र राज्ञो नलस्य सर्ववनिता जन-प्रियत्वं सन्दर्श्य तस्य शारीरिकसौष्ठवं सौन्दर्यञ्च प्रकारान्तरेण सविशेषं वर्णयति ।

अन्वयः—का निशि स्वप्नगतं तं न ददर्श, का च गोत्रस्खलिते तं न जगाद, का च रते तदात्मताध्यातधवा (सती) स्वमनोभवोद्भवं न चकार ।

व्याख्या—का=कामिनी, निशि=रजन्याम्, स्वप्नगतं=स्वापप्राप्तम्, तं=नलं, न=नहि, ददर्श=दृष्टवती, अपि तु सर्वा अपि ददर्शेति भावः, का च=नारी, गोत्रस्खलिते=नामस्खलने ('गोत्रं नाम्न्यचले कुले' इत्यमरः), तम्=राजानं नलम्, न=नहि, जगाद=निगदितवती, अपि तु सर्वा एव जगादेत्याशयः, का च=वनिता, रते=सुरतव्यापारे, तदात्मताध्यातधवा=नलरूपचिन्तितभर्तृका सती, ('धवः प्रियः पतिर्भर्त्ता' इत्यमरः) स्वमनो-भवोद्भवम्=निजमानसकामोत्पत्तिम्, न=नहि, चकार=विहितवती, अपि

तु सर्वा एव चकारेत्याशयः। अतिशयोक्तिरलङ्कारोऽत्र। वंशस्थवृत्तम्, 'जतौ तु वंशस्थमुदीरितं जरौ' इति लक्षणात्।

**समासः**—स्वप्नं गतः स्वप्नगतः, तम् स्वप्नगतम्। गोत्रस्य स्खलितम्, तस्मिन् गोत्रस्खलिते। तस्य=नलस्य, आत्मा=स्वरूपम्, यस्य सः तदात्मा, तदात्मनो भावः तदात्मता, ध्यातः धवः यया सा ध्यातधवा, तदात्मतया ध्यातधवा तदात्मताध्यातधवा। स्वस्य मनोभवः, तस्य उद्भवः, तम् स्वमनोभवोद्भवम्।

(२१) श्रियाऽस्य योग्याऽहमिति स्वमीक्षितुं
करे तमालोक्य सुरूपया धृतः।
विहाय भैमीमपदर्पया कया
न दर्पणः श्वासमलीमसः कृतः ॥१।३१॥

**प्रसङ्गः**—'सौन्दर्यदर्पान्विताः सर्वा एव भैमीव्यतिरिक्ताः रमण्यः राजानं नलमवलोक्य 'अहमेवास्यानुरूपा' इति मनसि विभाव्य स्वकरधृतादर्शे आत्मानं निर्वर्ण्य अहमयोग्येति निश्चयेन विषण्णा सत्यः कामिन्यः कदुष्णनिःश्वासेन दर्पणं मलिनयन्ति स्म' इति प्रोच्य महाकविः श्रीहर्षः राज्ञो नलस्य सर्वातिशायिशारीरिकसौन्दर्यं प्रकारान्तरेण द्रढयति।

**अन्वयः**—भैमीं विहाय कया सुरूपया तम् आलोक्य 'श्रिया अहम् अस्य योग्या' इति स्वम् ईक्षितुं करे धृतः दर्पः अपदर्पया (सत्या) श्वासमलीमसः न कृतः।

**व्याख्या**—भैमीम्=दमयन्तीम्, विहाय=परित्यज्य, कया सुरूपया=सुन्दर्या, तं=राजानं नलम्, आलोक्य=दृष्ट्वा, श्रिया=कान्त्या, अहम्, अस्य नलस्य, योग्या=सदृशी, इति=इत्थम्, मनसि चिन्तयित्वेति शेषः, स्वम्=निजम्, ईक्षितुम्=अवलोकयितुम्, करे=पाणौ, धृतः=गृहीतः, दर्पणः=मुकुरः ('दर्पणे मुकुरादर्शौ' इत्यमरः) अपदर्पया=गताभिमानया सत्या, श्वासमलीमसः=निःश्वासमलिनः ('मलीमसं तु मलिनं कच्चरं मलदूषितम्' इत्यमरः) न=नहि, कृतः=विहितः, अपितु भैमीं विहाय सर्वया सुन्दर्या निःश्वासवातेनादर्शः मलिनीकृतः इति भावः। अतिशयोक्तिरलङ्कारोऽत्र। वंशस्थवृत्तम्।

**समासः**—भीमस्य अपत्यं स्त्री भैमी, ताम् भैमीम्। शोभनं रूपं यस्या सा सुरूपा तया सुरूपया। अपगतः दर्पः यस्या सा तया अपदर्पया। श्वासैः मलीमसः श्वासमलीमसः।

( २२ ) नृपेऽनुरूपे निजरूपसम्पदां दिदेश तस्मिन्बहुशः श्रुतिं गते ।
विशिष्य सा भीमनरेन्द्रनन्दना मनोभवाज्ञैकवशंवदं मनः ॥ १।३३॥

प्रसङ्गः—'भीमभूपतनया दमयन्तीस्वसौन्दर्यसम्पदामनुरूपे राज्ञि नले बहुशः श्रवणगोचरमधिगते सति सविशेषं नलं प्रतिनिजचित्तमर्पितवती' इति निगदन् कविपुङ्गवो महाकविः श्रीहर्षः विरहिणां चक्षुःप्रीत्यादयो दशावस्थासु मध्ये तत्र चक्षुप्रीतिः श्रवणानुरागस्याप्युपलक्षणमतस्तत्पूर्विकां दमयन्त्याश्चित्तासङ्गास्यां द्वितीयामवस्थामत्र प्रस्तौति ।

अन्वयः—सा भीमनरेन्द्रनन्दना निजरूपसम्पदाम् अनुरूपे तस्मिन् नृपे बहुशः श्रुतिगते विशिष्य मनोभवाज्ञैकवशंवदं मनः दिदेश ।

व्याख्या—सा=पूर्वनिगदिता, भीमनरेन्द्रनन्दना=भीमभूपात्मजा दमयन्ती, निजरूपसम्पदाम्=स्वलावण्यसम्पत्तीनाम्, अनुरूपे=योग्ये, तस्मिन्=पूर्वोक्ते, नृपे=नरपतौ नले, बहुशः=नैकवारम्, श्रुतिम्=श्रवणं, गते=प्राप्ते सति, विशिष्य=सातिशयेन, मनोभवाज्ञैकवशंवदम्=मन्मथादेशैकाधीनम्, मनः=चित्तम्, दिदेश=समर्पितवती । तद्गुणश्रवणात्तदासक्तचित्तासीद् दमयन्तीति भावः । अस्य श्लोकस्य पूर्वार्द्धे छेकानुप्रास-वृत्त्यनुप्रासयोरेकस्मिन्नाश्रयेऽनुप्रवेशात् सङ्करालङ्कारः । वंशस्थवृत्तश्च ।

समासः—नन्दयतीति नन्दना, भीमश्चासौ नरेन्द्रः, भीमनरेन्द्रस्य नन्दना भीमनरेन्द्रनन्दना । रूपश्च सम्पदश्च, निजाश्च ता रूपसम्पदः, तासाम् निजरूपसम्पदाम् । रूपस्य योग्यम् अनुरूपम्, अनुरूपम् अस्याऽस्तीति, तस्मिन् अनुरूपे । नॄन् पातीति नृपः, तस्मिन् नृपे । मनोभवस्य आज्ञा, वशं ददतीति वशंवदम्, एकं च तत् वशंवदम्, मनोभवाज्ञाया एकवशंवदं तत् मनोभवाज्ञैकवशंवदम् ।

(२३) कथाप्रसङ्गेषु मिथः सखीमुखात्तृणेऽपि तन्व्या नलनामनि श्रुते ।
द्रुतं विधूयान्यदभूयताऽनया मुदा तदाकर्णनसज्जकर्णया ॥ १।३५॥

प्रसङ्गः—'विस्रम्भगोष्ठीप्रसङ्गेषु रहसि सखीमुखान्नलनामनि नलाख्ये तृणेऽपि श्रुते सति विदर्भराजतनया दमयन्ती कार्यान्तरं विहाय नलशब्दो नृपस्मारकतया तदाकर्णने दत्तमानसा अभवत्' इति प्रोच्य महाकविः श्रीहर्षः दमयन्त्याः श्रवणानुरागमत्रापि प्रकारान्तरेण सन्दर्शयति ।

अन्वयः—तन्व्या अनया मिथः कथाप्रसङ्गेषु सखीमुखात् नलनामनि तृणे अपि श्रुते द्रुतम् अन्यद् विधूय मुदा तदाकर्णनसज्जकर्णया अभूयत ।

व्याख्याः—तन्व्या=कृशाङ्ग्या, अनया=दमयन्त्या, मिथः=अन्योऽन्यं रहसि, कथाप्रसङ्गेषु=संलापावसरेषु ( 'प्रसङ्गः स्यादवसरः' इत्यमरः ) सखीमुखात् =वयस्याऽऽननात्, नलनामनि=नलाख्ये, तृणे अपि=अर्जुने अपि, ('नलः पोटगले राज्ञि' इति विश्वः, 'तृणमर्जुनम्' इत्यमरः) श्रुते=आकर्णिते, द्रुतम्=क्षिप्रम् ( 'लघु क्षिप्रमरं द्रुतम्' इत्यमरः ) अन्यत्=अपरं कार्यम्, विधूय=परिहाय, मुदा=हर्षेण, तदाकर्णनसज्जकर्णया=नलशब्दश्रवणदत्तश्रोत्रया, अभूयत= अभावि । अर्थान्तरप्रत्युक्तोऽपि नलशब्दो भूपतिस्मारकतया तदाकर्षकोऽभूदित्यनेन दमयन्त्याः स्नेहाधिक्यं व्यज्यते । अस्मिन् श्लोके औत्सुक्य-हर्षाख्यौ द्वौ स्थायिभिचारिभावौ नलविषयकरतेर्भावस्याङ्गी स्तः, एतावता भावसन्धिरत्र । वंशस्थवृत्तश्च ।

समासः—कथायाः प्रसङ्गाः, तेषु कथाप्रसङ्गेषु । सख्या मुखम्, तस्मात् सखीमुखात् । नलं नाम यस्य तत् नलनाम, तस्मिन् नलनामनि । तस्य आकर्णनम्, सज्जौ कर्णौ यस्याः सा सज्जकर्णा, तदाकर्णने सज्जकर्णा, तया तदाकर्णनसज्जकर्णया ।

( २४ ) नलस्य पृष्टा निषधागता गुणान् मिषेण दूतद्विजवन्दिचारणाः ।
निपीय तत्कीर्तिकथामथाऽनया चिराय तस्थे विमनायमानया ॥
१।३७॥

प्रसङ्गः—'निषधदेशसमागतात् दूतद्विजवन्दिचारणमुखात् कामिनीजनवृन्देषु कमनीयतमा दमयन्ती नलयशोवर्णनं प्रणयातिशयेन समाकर्ण्य बहुकालपर्यन्तं विमनायमाना अभूत्' इति निगदन् महाकविः श्रीहर्षः दमयन्त्याः श्रवणानुरागप्रकर्षमत्र वर्णयति ।

अन्वयः—अनया निषधागता दूतद्विजवन्दिचारणाः मिषेण नलस्य गुणान् पृष्टाः अथ तत्कीर्तिकथां निपीय चिराय विमनायमानया तस्थे ।

व्याख्या—अनया=दमयन्त्या, निषधागता=निषधेभ्यः आगताः, दूतद्विजवन्दिचारणाः=सन्देशहरविप्रस्तुतिपाठककुशीलवाः, ( 'स्यात् सन्देशहरो दूतः' इत्यमरः, 'भरता इत्यपि नटाश्चारणाश्च कुशीलवाः' इत्यमरः ) मिषेण= व्याजेन, नलस्य=एतन्नामकस्य भूपतेः, गुणान्=लावण्यशौर्यादीन्, पृष्टाः= अनुयुक्ताः, अथ=अनन्तरम्, तत्कीर्तिकथा=नलस्य यशःकथाऽमृतम्, निपीय=

प्रणयातिशयेन नितरां श्रुत्वा, चिराय=बहुकालं यावत्, ( 'चिराय चिररात्रा चिरस्याद्याश्चिरार्थकाः' इत्यमरः ) विमनायमानया=अन्तर्मनायमानया सत्या तस्थे=संस्थितम्। अस्मिन् श्लोके चिन्ताख्यव्यभिचारिभावस्योदयात् भावो दयालङ्कारः वंशस्थं वृत्तम्।

**समासः**—निषधेभ्य आगताः निषधागताः। दूताश्च द्विजाश्च वन्दिनश्च चारणाश्च इति दूतद्विजवन्दिचारणाः। तस्य कीर्तिः, तस्याः कथा, ताम् तत्कीर्ति कथाम्। विगतं मनो यस्याः सा विमना ( 'दुर्मना विमना अन्तर्मना स्यात् इत्यमरः ) विमना इव आचरतीति विमनायमाना, तथा विमनायमानया।

(२५) मनोरथेन स्वपतीकृतं नलं निशि क्व सा न स्वपति स्म पश्यति।
अदृष्टमप्यर्थमदृष्टवैभवात्करोति सुप्तिर्जनदर्शनाऽतिथिम्।
१।३९।

**प्रसङ्गः**—'शयनं विदधती भीमभूपतनया लावण्यप्रकर्षयुता दमयन्ती बहुश्रुतिङ्गतं निजकान्तं नलं सर्वस्यां रात्रौ ददर्श' इति प्रोच्य परमतार्किक महाकविः श्रीहर्षः 'विरहिणां स्वप्नसन्दर्शनं चितविनोदोपायहेतुभूतं भवति इत्येतावता राज्ञि नले भैम्याः अनुरागप्रकर्षं सन्दर्श्य साम्प्रतं तस्याः निजनाथी कृतं नलं रात्रावपि स्वप्नगतं दर्शनमत्र वर्णयति।

**अन्वयः**—स्वपती सा मनोरथेन स्वपतीकृतं नलं क्व निशि न पश्यति स्म ? सुप्तिः अदृष्टवैभवात् अदृष्टम् अपि अर्थं जनदर्शनाऽतिथिं करोति।

**व्याख्या**—स्वपती=निद्राती, सा=भैमी, मनोरथेन=स्वाभिलाषेण स्वपतीकृतं=निजभर्तृविहितं, नलम्=तन्नामकं राजानम्, क्व=कुत्र, निशि=रात्रौ, न=नहि, पश्यति स्म=ईक्षते स्म, अपितु सर्वस्यां रजन्यां दृष्ट वतीति भावः, यतो हि—सुप्तिः=स्वप्नः, अदृष्टवैभवात्=प्राक्तनभाग्यबलात् अदृष्टम् अपि=अविलोकितमपि, अर्थम्=पदार्थम्, जनदर्शनाऽतिथिम्=लोक नयनगोचरम्, करोति=विदधाति, स्वप्नरूपेण सन्दर्शयतीति भावः। सामान्ये विशेषसमर्थनरूपोऽर्थान्तरन्यासालङ्कारोऽत्र। वंशस्थं वृत्तम्, 'जतौ तु वंशस्थ मुदीरितं जरौ' इति लक्षणात्।

**समासः**—स्वस्य पतिः स्वपतिः। अस्वपतिः स्वपतिर्यथा सम्पद्यते तथा कृतः स्वपतीकृतः, तम् स्वपतीकृतम्। न दृष्टम् अदृष्टम्, अदृष्टस्य वैभवं, तस्मात् अदृष्टवैभवात्। जनानां दर्शनम्, तस्य अतिथिः, तम् जनदर्शनाऽतिथिम्।

( २६ ) निमीलितादक्षियुगाच्च निद्रया
हृदोऽपि बाह्येन्द्रियमौनमुद्रितात् ।
आदर्शि सङ्गोप्य कदाऽप्यवीक्षितो
रहस्यमस्याः स समहन्महीपतिः ।। १।४० ।।

प्रसङ्गः—'चारुसौन्दर्यप्रकर्षान्विता भीमभूपतनया भैमी रात्रौ कदाचिन्निद्रायां महीपतेः नलस्य स्वप्नसन्दर्शनं विहितवती' इति निगदन् कविपुङ्गवो महाकविः श्रीहर्षोऽत्र दमयन्त्याः स्वप्ने नलवीक्षणं वर्णयति ।

अन्वयः—निद्रया निमीलितात् अक्षियुगात् बाह्येन्द्रियमौनमुद्रितात् हृदः अपि सङ्गोप्य कदाऽपि अवीक्षितः अस्या महत् रहस्यं स महीपतीः अदर्शि ।

व्याख्या—निद्रया=स्वापेन, निमीलितात्=मुकुलिताद्, अक्षियुगात्=बाह्येन्द्रियमौनमुद्रितात्=चक्षुरादिबहिरिन्द्रियव्यापारराहित्यप्रतिष्टब्धात्, हृदः अपि=स्वान्तःकरणादपि, संगोप्य=सम्यग् गोपयित्वा, कदाऽपि=कस्मिन्नपि काले, अवीक्षितः=अत्यन्तादृष्टचरः, अस्याः=भैम्याः, महत्=विपुलम्, रहस्यम्=अतिगोप्यं वस्तु, सः=पूर्वनिगदितः, महीपतिः=भूपतिः नलः आदर्शि=दर्शितः । वंशस्थं वृत्तम् 'जतौ तु वंशस्थमुदीरितं जरौ' इति लक्षणात् ।

समासः—अक्ष्णो युगम् अक्षियुगम्, तस्मात् अक्षियुगात् । बहिर्भवानि बाह्यानि, बाह्यानि च तानि इन्द्रियाणि, मुनेर्भावः मौनम्, बाह्येन्द्रियाणां मौनम्, तेन मुद्रितम्, तस्मात् बाह्येन्द्रियमौनमुद्रितात् । न वीक्षितः अवीक्षितः । रहसि भवं रहस्यम् । मह्याः पतिः महीपतिः ।

( २७ ) स्वकान्तिकीर्तिव्रजमौक्तिकस्रजः
श्रयन्तमन्तर्घटनागुणश्रियम् ।
कदाचिदस्या युवधैर्यलोपिनं
नलोऽपि लोकादशृणोद् गुणोत्करम् ।।१।४२।।

प्रसङ्गः—'नरपतिनलः कदाचिज्जनेभ्यस्तरुणचित्तस्थैर्य्यापहारिणं दमयन्त्याः सुषमासन्दोहमशृणोत्' इति कथयन् महाकविः श्रीहर्षः साम्प्रतं नलस्य दमयन्त्यामनुरागवर्णनमितःप्रभृति प्रारभतेऽत्र ।

अन्वयः—नलः अपि कदाचित् लोकात् स्वकान्तिकीर्तिव्रजमौलिकस्रजः अन्तर्घटनागुणाश्रियं श्रयन्तं युवधैर्यलोपिनम् अस्या गुणोत्करम् अशृणोत् ।

**व्याख्या**—नलः अपि=एतन्नामा नरपतिरपि, कदाचित्=जातुचित्, लोका: =आगन्तुकजनात्, स्वकान्तिकीर्तिव्रजमौक्तिकस्रजः=निजसौन्दर्ययशः समूह मुक्ताहारस्य, अन्तर्घटनागुणश्रियम्=अभ्यन्तरगुम्फनसूत्रसुषमाम्, श्रयन्तम्= आश्रयन्तम्, युवधैर्यलोपिनम्=तरुणचित्तधीरत्वापहारकम्, अस्याः=भैम्या: गुणोत्करम्=सौन्दर्यसौशील्यादिगुणसन्दोहम्, अशृणोत्=आकर्णितवान्। अ: कीर्तिव्रजगुणोत्करयोर्मुक्ताहारगुम्फनसूत्रत्वरूपणाद्रूपकालङ्कारः। वंशस्थं वृत्त: 'जतौ तु वंशस्थमुदीरितं जरौ' इति लक्षणात्।

**समासः**—स्वस्य कान्तिः स्वकान्तिः, कीर्तीनां व्रजः कीर्तिव्रजः, स्वकान्ति कीर्तिव्रजः स्वकान्तिकीर्तिव्रजः, मौक्तिकानां स्रक् मौक्तिकस्रक्, स्वकान्तिकीर्तिव्र: एव मौक्तिकस्रक्, तस्याः स्वकान्तिकीर्तिव्रजमौक्तिकस्रजः। अन्तः घटना, अन्त र्घटनायाः गुणः, तस्य श्रीः, ताम् अन्तर्घटनागुणश्रियम्। यूनां धैर्यम्, युवधै लुम्पतीति युवधैर्यलोपी, तम् युवधैर्यलोपिनम्। गुणानाम् उत्करः, त: गुणोत्करम्।

(२८) तमेव लब्ध्वाऽवसरं ततः स्मरः
शरीरशोभाजयजातमत्सरः।
अमोघशक्त्या निजयेव मूर्तया
तया विनिर्जेतुमियेष नैषधम्॥ १।४३॥

**प्रसङ्गः**—'स्वशरीरसौन्दर्यविजयोत्पन्नविद्वेषयुतो मन्मथः स्वचित्तानुकू मवसरमासाद्य दमयन्त्याः व्याजेन नैषधं जेतुमैच्छत्। इति निगदन् कविपुङ्ग महाकविः श्रीहर्षोऽत्र नलस्य भैम्यां रागोदयं वर्णयति।

**अन्वयः**—ततः शरीरशोभाजयजातमत्सरः स्मरः तम् एव अवसरं लब्ध्वा मूर्तया निजया अमोघशक्त्या इव तया नैषधं विनिर्जेतुम् इयेष।

**व्याख्या**—ततः=भैमीगुणश्रवणानन्तरम्, शरीरशोभाजयजातमत्सरः= स्वतनुकान्ति विजयसम्भूतविद्वेषः, स्मरः=कन्दर्पः, तम् एव=नलकृतभैमी गुणश्रवणात्मकम् एव, अवसरम्=अवकाशम्, प्रसङ्गं वा, लब्ध्वा=आसाद्य मूर्तया=मूर्तिमत्या, निजया=स्वकीयया, अमोघशक्त्या=अकुण्ठितसामर्थ्ये इव=यथा, तया=दमयन्त्या, करणभूतयेत्याशयः, नैषधम्=नरपतिं नलं विनिर्जेतुम्=पराभवितुम्, इयेष=ऐच्छत्। रिपवो रन्ध्रान्वेषिणो भवन्ती त्याशयः। उत्प्रेक्षालङ्कारोऽत्र। वंशस्थं वृत्तम्।

**समासः**—शरीरस्य शोभा, तस्याः जयः, जातः मत्सरः यस्य सः जा

मत्सरः, शरीरशोभाजयेन जातमत्सरः शरीरशोभाजयजातमत्सरः। अमोघा चासौ शक्तिः, तया अमोघशक्त्या।

(२९) अकारि तेन श्रवणाऽतिथिर्गुणः
क्षमाभुजा भीमनृपात्मजाश्रयः।
तदुच्चधैर्यव्ययसंहितेषुणा
स्मरेण च स्वात्मशरासनाश्रयः॥ १।४४॥

प्रसङ्गः—'नरपतिः नलः दमयन्त्याः सौन्दर्यसौशील्यादिगुणान् स्वश्रवणातिथिं चकारः, अर्थात् जनेभ्यः आकर्णितवान्, तदाऽपरस्मिन् पक्षे नलोन्नतधीरताविनाशार्थं नलविजयार्थंश्च स्वचापसंयोजितबाणो मन्मथः निजचापारोपितं गुणं (मौर्वीं) श्रवणपर्यन्तमाकृष्टवान् इति निगदन् महाकविः श्रीहर्षोऽत्र नलस्य दमयन्त्यां रागोदयमभिव्यनक्ति।

अन्वयः—तेन क्षमाभुजाभीमनृपात्मजाश्रयः गुणः श्रवणाऽतिथिः अकारि, तदुच्चधैर्यव्ययसंहितेषुणा स्मरेण च स्वात्मशरासनाश्रयः गुणः (श्रवणातिथिः अकारि)।

व्याख्या—तेन=पूर्वनिगदितेन, क्षमाभुजा=नरपतिना नलेन, भीमनृपात्मजाश्रयः=दमयन्तीनिष्ठः, गुणः=सौन्दर्यवैदुष्यादिः, श्रवणातिथिः=श्रवणविषयः, अकारि=विहितः, नरपतिः नलः दमयन्त्याः सौन्दर्यवैदुष्यादिगुणसन्दोहमाकर्णितवानित्याशयः, तदुच्चधैर्यव्ययसंहितेषुणा=नलोन्नतधैर्यविनाशायसंयोजितबाणेन, स्मरेण च=मनसिजेन च, स्वात्मशरासनाश्रयः=निजदृढधनुर्निष्ठः, गुणः=मौर्वी, (श्रवणातिथिः=श्रोत्रेन्द्रियागन्तुकः, अकारि=कृतः)। कामदेवो नलविजयार्थं स्वचापारोपितं गुणं=मौर्वीं श्रवणपर्यन्तं समाकृष्टवानित्याशयः। अत्रोक्तवाक्यार्थस्य पूर्ववाक्यार्थहेतुकं काव्यलिङ्गमलङ्कारः। 'अकारि' इत्येकस्यां क्रियायां नल-कामदेवयोरित्युभयोः कर्तृत्वसम्बन्धाभिधानात् तुल्ययोगितालङ्कारः, 'स्वात्मशासनाश्रयः' इत्यस्मिनपदे 'स्व' 'आत्म' इत्युभयशब्दप्रयोगात् पुनरुक्तिः प्रतीयते, पश्चात् सु (शोभन) +आत्मशरासन' इत्येवंविधार्थप्रतीत्या पुनरुक्तवदाभासालङ्कारोऽत्र, आपाततो यदर्थस्य पौनरुक्त्यावभासनम्। पुनरुक्तवदाभासः स भिन्नाकारशब्दगः'॥' (सा. द. १०।२) इति लक्षणात्। एतावता समेषां निरपेक्षतया स्थितिः सत्वात् संसृष्टिरलङ्कारोऽत्र। वंशस्थवृत्तम्।

समासः—क्षमां भुनक्तीति क्षमाभुक्, तेन क्षमाभुजा। भीमश्चासौ नृपः,

तस्य आत्मजा भीमनृपात्मजा आश्रयः यस्य सः भीमनृपात्मजाश्रयः । श्रवणयो अतिथिः श्रवणातिथिः । उच्चं च तत् धैर्यम्, उच्चधैर्यस्य व्ययः, उच्चधैर्यव्ययः संहितः इषुः येन सः संहितेषुः, तदुच्चधैर्यव्ययसंहितेषु, तेन तदुच्चधैर्यव्यय संहितेषुणा । शोभनम् आत्मशरासनम्, स्वात्मशरासनम् आश्रयः यस्य स स्वात्मशरासनाश्रयः ।

( ३० ) अमुष्य धीरस्य जयाय साहसी
तदा खलु ज्यां विशिखैः सनाथयन् ।
निमज्जयामास यशांसि संशये
स्मरस्त्रिलोकी विजयार्जितान्यपि ।। १।४५ ।।

**प्रसङ्गः**—'त्रिभुवनविजेताऽपि स्मरो नलविजयार्थं सम्प्रवर्तमानः सन् सोऽयं कामः नलविजये समर्थो भवेन्नवेति संशयपात्रं बभूवे'ति निगद महाकविः श्रीहर्षः दमयन्तीं प्रति नलस्य रागोदये हेतुत्वेनेदं पद्यमत्र प्रस्तौति

**अन्वयः**—साहसी स्मरः धीरस्य अमुष्य जयाय तदा ज्यां विशिखैः सना यन् त्रिलोकीविजयार्जितानि अपि यशांसि संशये निमज्जयामास खलु ।

**व्याख्या**—साहसी=साहसान्वितः, स्मरः=कन्दर्पः, धीरस्य=धैर्यसहि तस्य, अमुष्य=नलस्य, जयाय=विजयाय, तदा=तस्मिन् काले, ज्यां= मौर्वीम्, ( 'मौर्वी ज्या शिञ्जिनी गुणः' इत्यमरः ) विशिखैः=शरैः, सनाथय संयोजन् त्रिलोकीविजयार्जितानि अपि=त्रिभुवनजयोपार्जितानि अपि, यशां =कीर्तीः, संशये=सन्देहे, निमज्जयामास=संस्थापयामास, खलु=निश्चयेन 'न संशयमनारुह्य नरो भद्राणि पश्यति' इति न्यायाद् विलम्बमक्रियमाणः स 'वृद्धयपेक्षया अनुचितकर्मारम्भे मूलमपि नश्येदि'त्यात्मानं संशयपदवीमारोपि तवानित्याशयः । अत्र स्मरस्योक्तसंशयाऽसम्बन्धेऽपि तत्सम्बन्धोक्तेरतिशयो क्तिरलङ्कारः । वंशस्थवृत्तम् ।

**समासः**—साहसम् अस्यास्तीति साहसी । त्रयाणां लोकानां समाहार त्रिलोकी, त्रिलोक्या विजयः, तेन अर्जितानि, तानि त्रिलोकीविजयार्जितानि ।

( ३१ ) अनेन भैमीं घटयिष्यतस्तथा
विधेरवन्ध्येच्छतया व्यलासि तत् ।
अभेदि तत्तादृगनङ्गमार्गणै-
र्यदस्यपौष्पैरपि धैर्यकञ्चुकम् ।। १।४६ ।।

**प्रसङ्गः**—अति शौर्यगुणसमन्वितस्य महीपते नलस्य यद्धैर्यकञ्चुकं

नङ्गपुष्पशरेण विदीर्णम्, तत्र कारणं विनिर्दिशन् महाकविः श्रीहर्षः 'दमयन्ती-
लयोर्दाम्पत्यघटनाय दैवसाहाय्यादेव त्रिलोकविजयिनः पुष्पधन्वनः पुरुषकारः
लविजयोद्यमप्रसङ्गे फलितः' इत्यस्य वर्णनं विदधाति ।

अन्वयः—अनेन भैमीं घटयिष्यतः विधेः अवन्ध्येच्छतया तत् तथा
यलासि, यत् पौष्पैः अपि अनङ्गमार्गणैः अस्य तादृक् तत् धैर्यकञ्चुकम्
भेदि ।

व्याख्या—अनेन=नलेन समम्, भैमीम्=दमयन्तीम्, घटयिष्यतः=संयो-
यिष्यतः, विधेः=विधातुः, अवन्ध्येच्छतया=अमोघसङ्कल्पत्वेन, तत्, तथा=
न प्रकारेण, व्यलासि=विलसितम्, यत्, पौष्पैः अपि=कुसुमनिर्मितैरपि, न तु
ठिनैरित्याशयः, अनङ्गमार्गणैः=मनसिजशरैः, ('पृषत्कबाणविशिखा अजि-
गखगाशुगाः । कलम्बमार्गणशराः पत्री रोप इषुर्द्वयोः' इत्यमरः) न तु देहवतो
णैरित्याशयः, अस्य=नलस्य, तादृक्=अतिकठिनम्, तत्=प्रथितं, धैर्य-
ञ्चुकम्=धीरत्ववारबाणम् ('कञ्चुको वारबाणोऽस्त्री' इत्यमरः), अभेदि
=भिन्नम् । विधेरभिलाषसाफल्येनाऽङ्गविरहितस्य मन्मथस्य कुसुममयैरपि-
रैर्नलस्य धैर्यकवचं भिन्नमित्याशयः । अस्मिन् श्लोकेऽनङ्गकुसुमबाणैर्नलस्य
र्यकवचं भिन्नमित्यत्र विरोधः प्रतीयते, विधेरवन्ध्येच्छतया तत्परिहारः । धैर्ये
ञ्चुकस्यारोपात् रूपकालङ्कारः । एवं विरोधाभासरूपकालङ्कारयोरङ्गाङ्गि-
वेन सङ्करः । वंशस्थवृत्तम् ।

समासः—भीमस्य अपत्यं स्त्रीभैमी, ताम् भैमीम् । न वन्ध्या अवन्ध्या,
वन्ध्या इच्छा यस्य सः, अवन्ध्येच्छस्य भावः, तया अवन्ध्येच्छतया । पुष्पा-
म् इमे, तैः पौष्पैः । अविद्यमानानि अङ्गानि यस्य सः अनङ्गः, अनङ्गस्य
र्गणाः, तैः अनङ्गमार्गणैः । धैर्यम् एव कञ्चुकम् इति धैर्यकञ्चुकम् ।

(३२) उरोभुवा कुम्भयुगेन जृम्भितं नवोपहारेण वयःकृतेन किम् ।
त्रपासरिद्दुर्गमपि प्रतीर्य सा नलस्य तन्वीहृदयं विवेश यत् ॥
१।४८॥

प्रसङ्गः—'भैमीकुचकुम्भविभ्रमश्रवणात् नरपतिः नलस्तस्यां त्रपां विहाया-
क्तचित्तोऽभवदि'ति निगदन् महाकविः श्रीहर्षः दमयन्त्यां राज्ञो नलस्य
नः सङ्गं चारुतया प्रतिपादयत्यत्र ।

अन्वयः—तन्वी सा त्रपासरिद्दुर्गम् अपि प्रतीर्य नलस्य हृदयं यत् विवेश
तत् वयःकृतेन नवोपहारेण उरोभुवा कुम्भयुगेन जृम्भितं किम् ?

व्याख्या—तन्वी=कृशाङ्गी, सा=भैमी, त्रपासरिद्दुर्गमपि=व्रीडाशशगादुर्गमस्थलमपि, ('मन्दाक्षं ह्रीस्त्रपा व्रीडा लज्जा' इत्यमरः 'अथ पक्षे-सरित्। तरङ्गिणी शैवलिनी तटिनी ह्रादिनी धुनी। स्रोतस्वती द्वीप-स्रवन्ती निम्नगाऽऽपगा॥' इत्यमरः) प्रतीर्य=प्रकर्षेण तीर्त्वा, नलस्य=नामकस्य नरपतेः, हृदयं=चित्तं, यत् विवेश=प्रविष्टवती, तत्=नैषधप्रवेशनम्, वयःकृतेन=यौवनावस्थाविहितेन, नवोपहारेण=अभिनवोपरूपेण, ('उपायनमुपग्राह्यमुपहारस्तथोपदा' इत्यमरः) उरोभुवा=वक्षःप्रादुर्भूतेन, कुम्भयुगेन=कलशरूपस्तनद्वयेन, जृम्भितं किम्!=विलसितं किं पद्येऽस्मिन्नतिशयोक्तिरुत्प्रेक्षारूपक—इत्येषां त्रयाणामलङ्काराणां निरपेक्षस्थितिसत्वात् संसृष्टिरलङ्कारोऽत्र। वंशस्थं वृत्तम्।

समासः—त्रपा एव सरित्, त्रपासरित् एव दुर्गं, तत् त्रपासरिद्दुर्गम्। उरसि भवतीति, तेन उरोभुवा। कुम्भयोः युगं, तेन कुम्भयुगेन।

(३३) अपह्नुवानस्य जनाय तन्निजा-
मधीरतामस्य कृतं मनोभुवा।
अबोधि तज्जागरदुःखसाक्षिणी
निशा च शय्या च शशाऽङ्ककोमला॥ १।४

प्रसङ्गः—पद्येऽस्मिन् महाकविः श्रीहर्षः नरपतेः नलस्य स्वान्ते दमयन्तीजन्यं सम्प्रीतिं सन्दर्श्य भैमीविरहे नैषधस्य जागराऽवस्थां साम्प्रतमत्र वर्णयति।

अन्वयः—निजाम् अधीरतां जनाय अपह्नुवानस्य अस्य मनोभुवा यत् कृतं तत् जागरदुःखसाक्षिणी शशाऽङ्ककोमला निशा शय्या च अबोधि।

व्याख्या—निजाम्=स्वकीयाम्, अधीरताम्=चपलत्वम्, जनाय=लोकाय, अपह्नुवानस्य=अपलपतः, अस्य=नलस्य, मनोभुवा=मन्मथेन, यत्=जागरप्रलापादिकं, कृतं=विहितं, तत्, जागरदुःखसाक्षिणी=जागरपीडायाः साक्षाद्द्रष्ट्री, शशाऽङ्कोमला=हिमांशुकोमला, शीतलेति निशा=तमस्विनी, शय्या=शयनीयञ्च, अबोधि=गतवती। निशा शय्या च नैषधजागरदुःखसाक्षिणीत्याशयः। तुल्ययोगिता-उपमालङ्कारयोश्चात्र संसृष्टिः। वंशस्थं वृत्तम्।

समासः—न धीरता अधीरता, ताम् अधीरताम्। अपह्नुत इति अपह्नुवानः, तस्य अपह्नुवतः। मनसि भवतीति मनोभूः, तेन मनोभुवा। जागरः, साक्षाद्द्रष्ट्री साक्षिणी, जागरदुःखस्य साक्षिणी जागरदुःखसाक्षिणी

शशः अङ्कः यस्य सः शशाङ्कः, शशाङ्केन कोमला शशाङ्ककोमला। शय्या पक्षे—शशाङ्क इव कोमला शशाङ्ककोमला। शेते अस्याम् इति शय्या।

( ३४ ) अवाप साऽपत्रपतां स भूपतिर्जितेन्द्रियाणां धुरि कीर्तितस्थितिः।
असंवरे शम्बरवैरिविक्रमे क्रमेण तत्र स्फुटतामुपेयुषि ॥ १।५३॥

**प्रसङ्गः**—'जितेन्द्रियजनसमवाये लब्धकीर्तिः भूपतिर्नलः दमयन्तीमभिलक्ष्य-क्रमेण नानाविधविकारमासाद्य जनसंसदि कामविकारे व्यक्ते सति लज्जितो बभूव' इति निगदन् महाकविः श्रीहर्षः महाकाव्यस्यास्य नायकस्य नरपतेः नलस्य मदनविकारस्यातिशायित्वमत्र सन्दर्शयति।

**अन्वयः**—जितेन्द्रियाणां धुरिकीर्तितस्थितिः स भूपतिः तत्र असंबरे शम्बर-वैरिविक्रमें क्रमेण स्फुटताम् उपेयुषि साऽपत्रपताम् अवाप।

**व्याख्या**—जितेन्द्रियाणां=वशीकृतविषयिणां मानवानां, ('हृषीकं विषयीन्द्रियम्' इत्यमरः) धुरि=अग्रे, कीर्तितस्थितिः=स्तुतमर्यादः, सः= पूर्वनिगदितः, भूपतिः=नलः, तत्र=तस्मिन्, असंवरे=संवरितुमशक्ये, शम्बरवैरिविक्रमे=मनसिजपराक्रमजनितविकारे, ('शम्बराऽरिर्मनसिजः' इत्यमरः) क्रमेण=क्रममनुसरता, स्फुटताम्=व्यक्तताम्, उपेयुषि=अधिगत-वति सति, साऽपत्रपताम्=अन्येभ्यः सलज्जताम्, अवाप=सम्प्राप। जनसमवाये मदनविकारे सुस्पष्टे सति नलः लज्जितोऽभूदित्याशयः। श्लोकस्यास्य प्रथम-चरणे पकारस्यानेकधावृत्त्या वृत्त्यनुप्रासः 'अनेकस्यैकधा साम्यमसकृद्वाऽप्यनेकधा। एकस्य सकृदप्येष वृत्त्यनुप्रास उच्यते'॥ (सा. द.) इति लक्षणात्, पूर्वार्द्धेऽ-न्त्यानुप्रासः 'व्यञ्जनं चेद्यथाऽवस्थं सहाद्येन स्वरेण तु। आवर्त्यतेऽन्त्ययोज्यत्वा-दन्त्याऽनुप्रास एव तत्'॥ इति लक्षणात्, उत्तरार्द्धे 'वरे···म्बर' 'क्रमे क्रमे' इत्येवंप्रकारेण व्यञ्जनसमुदायान्यावृत्त्या छेकानुप्रासः। इत्थं 'वृत्त्यनुप्रास-अन्त्याऽनुप्रास-छेकानुप्रास' इत्येतेषामलङ्काराणां निरपेक्षतया स्थितिसत्वात् संसृष्टिरलङ्कारोऽत्र। वंशस्थं वृत्तम्।

**समासः**—जितानि इन्द्रियाणि यैस्ते, तेषाम् जितेन्द्रियाणाम्। संवरणं संवरः शमश्चेत्यपि, न विद्यते संवरो यस्य, तस्मिन् असंवरे। शम्बरस्य वैरी, शम्बर-वैरिणः विक्रमः, तस्मिन् शम्बरवैरिविक्रमे। अन्यतः लज्जा अपत्रपा, अपत्रपया सहितः सापत्रपः, साऽपत्रपस्य भावः साऽपत्रपता, तां साऽपत्रपताम्।

( ३५ ) अलं नलं रोद्धुममी किलाऽभवन्गुणा विवेकप्रभवा न चापल
स्मरः स रत्यामनिरुद्धमेव यत्सृजत्ययं सर्गनिसर्ग ईदृश
११५

प्रसङ्गः—भैमीमभिलक्ष्य मनोभुवा भृशं सन्तप्तस्य भूपतेः नलस्य धी
विदूरीकृत्य तस्योपरि कन्दर्पविजयप्रदर्शनपुरस्सरं मदनविकाराणामतिशा
सम्यगुपवर्ण्य 'विवेकादयो गुणाः नलचापलं निवारयितुं कथं न समर्था अभूव
इत्याशङ्कां निराकरोति महाकविः श्रीहर्षोऽत्र ।

अन्वयः—अमी विवेकप्रभवा गुणा नलं चापलं रोद्धुम् अलं न अभवन् कि
यत् स स्मरः रत्याम् अनिरुद्धम् एव सृजति, ईदृशः अयं सर्गनिसर्गः ।

व्याख्या—अमी=एते, विवेकप्रभवाः=युक्तायुक्तविचारसमुद्भूताः, गु
=धैर्यप्रभृतयः, नलं=नैषधं, चापलं=स्मरजनितं चाञ्चल्यं, रोद्धुं=निव
यितुं, अलं=समर्थाः, न=नहि, अभवन्=जाताः, किल=निश्चयेन।
हेतुमुपन्यस्यति—यत्=यस्माद्धेतोः, सप्रथितः, स्मरः=मनसिजः, रत्याम्
अनुरागे सति, ( पक्षा०—'रति' इत्याख्यस्वप्रियायां ) ('रतिः स्मरप्रियाया
रागेऽपि सुरतेऽपि च' इति विश्वः) अनिरुद्धम्=अनीश्वरम्, अवशं वा, (पक्षा०
अनिरुद्धनामकमात्मजमेव ) ( 'अनिरुद्धः कामपुत्रेऽरुद्धे चानीश्वरेऽपि च' इ
विश्वः ) सृजति=विदधाति, करोति वा । ईदृशः=एतादृशः, अयम्=ए
सर्गनिसर्गः=सृष्टिस्वभावः । स्मरः रतौ=अनुरागे समुदिते सति जनं चपल
वशं वा करोति, अथवा स्मरः रतौ=निजदयितायां अनिरुद्धमेव=तन्नाम
पुत्रमेव उत्पादयति, एतादृशः सृष्टेः स्वभाव इत्याशयः ।

स्मररागदुर्वारतायाः सर्वसृष्टिसाधारण्येन चापलदुर्वारतासमर्थनात् सा
न्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासालङ्कारोऽत्र, 'सामान्यं वा विशेषेण, वि
षस्तेन वा यदि । कार्यं च कारणेनेदं, कार्येण च समर्थ्यते ।। साधर्म्येणेतरेण
र्थान्तरन्यासोऽष्टधा ततः ।' ( सा. द. ) इति लक्षणात् । वंशस्थं वृत्तम् । तल्ल
क्षणं यथा—'जतौ तु वंशस्थमुदीरितं जरौ' इति ।

समासः—विवेकः प्रभवः येषां ते विवेकप्रभवाः । चपलस्य भावः चाप
तत् चापलम् । न निरुद्धम् तद् अनिरुद्धम् ।

(३६) अनङ्गचिह्नं स विना शशाक नो यदासितुं संसदि यत्नवानपि
क्षणं तदाऽऽरामविहारकैतवान्निषेवितुं देशमियेष निर्जनम्
११६

प्रसङ्गः—'मन्मथेन भृशं सन्तप्तो नरपतिः नलो सदाऽनङ्गचिह्नं गोपायितुं सक्षमो नाऽभूत् तदोपवनविहारकैतवान्निर्जनं स्थानं सेवितुमैच्छत' इति निगदन् महाकविः श्रीहर्षः राज्ञो नलस्य मनोरथसिद्ध्यौपयिकदिव्यहंससंवादनिदानभूतं वनविहारवर्णनमत्र प्रस्तौति ।

अन्वयः—स यत्नवान् अपि संसदि यदा अनङ्गचिह्नं विना आसितुं नो शशाक, तदाक्षणम् आरामविहारकैतवात् निर्जनं देशं निषेवितुम् इयेष ।

व्याख्या—स=नलः, यत्नवान् अपि=विहितप्रयत्नोऽपि, संसदि=परिषदि ('समज्या परिषद् गोष्ठी सभासमिति संसदः' इत्यमरः ।) यदा=यस्मिन् काले, अनङ्गचिह्नं विना=मूर्च्छाप्रलापादिमदनविकारं विना, आसितुं=उपवेष्टुं न=नहि, शशाक=समर्थो बभूव, तदा=तस्मिन् काले, क्षणं=कञ्चित् कालपर्यन्तं, आरामविहारकैतवात्=उपवनक्रीडाव्याजात्, निर्जनं=जनरहितं, देशं=स्थानं, निषेवितुं=समाश्रययितुं, इयेष=ऐच्छत् । लज्जापरिहारार्थं देशान्तरं गन्तुमभिलाषितवानित्याशयः । एतेन चापलास्ये सञ्चारिणी भ्रमणलक्षणोऽनुभावः समुदितः ।

वृत्त्यनुप्रासालङ्कारोऽत्र, 'अनेकस्यैकधा साम्यमसकृद्वाऽप्यनेकधा । एकस्य सकृदप्येष वृत्त्यनुप्रास उच्यते ।। ( सा. द. ) इति लक्षणात् । वंशस्थं वृत्तम् ।

समासः—यत्नोऽस्यास्तीति यत्नवान् । अविद्यमानानि अङ्गानि यस्य स अनङ्गः, अनङ्गस्य चिह्नं, तत् अनङ्गचिह्नम् । आरामस्य विहारः आरामविहारः, आरामविहारस्य कैतवः, तस्मात् आरामविहारकैतवात् । निर्गता जना यस्मात्, तम् निर्जनम् ।

( ३७ ) अथ श्रिया भर्त्सितमत्स्यकेतनः
समं वयस्यैः स्वरहस्यवेदिभिः ।
पुरोपकण्ठोपवनं किलेक्षिता-
ऽऽदिदेश यानाय निदेशकारिणः ।। १।५६ ।।

प्रसङ्गः—'निर्जनदेशनिषेवणेच्छानन्तरं श्रिया तिरस्कृतकामो नरपतिः नलो नगरसन्निकृष्टसंस्थितोपवनं प्रति गमनाय वाहनमानेतुमादेशकारिणो जनान् आज्ञापयामास' इति निगदन् महाकविः श्रीहर्षः भूपतेः नलस्योपवनविहारार्थं गमनेहां प्रकारान्तरेणात्र वर्णयति ।

अन्वयः—अथ श्रिया भर्त्मितमत्स्यकेतनः स्वरहस्यवेदिभिः वयस्यैः समं पुरोककण्ठोपवनम् ईक्षिता ( सन् ) यानाय निदेशकरिणः आदिदेश किल ।

**व्याख्या**—अथ=अनन्तरम्, श्रिया=स्वसौन्दर्येण, भर्त्सितमत्स्यकेतनः=तिरस्कृतमदनो, नलः, स्वरहस्यवेदिभिः=निजभैमीरागमर्मज्ञैः, वयस्यैः=समावयोभिः मित्रैः समं=साकं, पुरोपकण्ठोपवनं=नगराऽन्तिकाऽऽरामम्, ('उपकण्ठाऽन्तिकाऽभ्यर्णाऽभ्यग्रा अप्यभितोऽव्ययम्' इत्यमरः) ईक्षिता=विलोकितारः (सन्) यानाय=गमनाय यानमानेतुं, निदेशकारिणः=आज्ञाकरान्, आदिदेश=आज्ञापयामास । उपमालङ्कारोऽत्र, वंशस्थं वृत्तम् ।

**समासः**—मत्स्यः केतनं=चिह्नं यस्य सः मत्स्यकेतनः, भर्त्सितः मत्स्यकेतनः येन स भर्त्सितमत्स्यकेतनः । रहसि=एकान्ते भवं रहस्यम्, स्वरहस्यं विदन्तीति तच्छीलाः, तैः स्वरहस्यवेदिभिः । वयसा तुल्याः वयस्याः, तैः वयस्यैः । पुरस्य उपकण्ठः, पुरोपकण्ठे उपवनं, तत् पुरोपकण्ठोपवनम् । ईक्षत इति ईक्षिता । निदेशं कुर्वन्तीति तच्छीलाः, तान् निदेशकारिणः ।

( ३८ ) अथाऽन्तरेणाऽवटुगमिनाऽध्वना
निशीथिनीनाथमहःसहोदरैः ।
निगालगाद् देवमणेरिवोत्थितै-
र्विराजितं केशरकेशररश्मिभिः ।। १।५८ ।।

**प्रसङ्गः**—स्मरेणातिमात्रं सन्तप्तस्य कन्दर्पविकृतिं निह्नोतुमशक्नुवतः त एव रहसि व्रजितुं विहितनिश्चयस्य नरपतेः नलस्य पुरोपकण्ठोपवनं प्रति गमनाय परिजनैरानीतस्य हयस्य वर्णनं विदधाति महाकविः श्रीहर्षोऽत्र ।

**अन्वयः**—अथ निशीथिनीनाथमहःसहोदरैः निगालगाद् देवमणेः आन्तरेण अवटुगामिना अध्वना उत्थितैः इव केशरकेशररश्मिभिः विराजितं ( तं हयं क्षितिपाकशासनः स आरुरोह' इत्यग्रिमेणान्वयः ) ।

**व्याख्या**—अथ=अश्वानयनानन्तरं, निशीथिनीनाथमहःसहोदरैः=हिमांशुगभस्तिसमैः शुभ्रैः, निगालगात्=गलोद्देशात्, ('निगालस्तु गलोद्देशः' इत्यमरः ) देवमणेः=देवमणिनामकदक्षिणावर्तविशेषणात्, आन्तरेण=आभ्यन्तरेण, अवटुगामिना=कृकाटिकापर्यन्तगतेन, अध्वना=मार्गेण, उत्थितैः=उद्गतैः, इव=यथा, केशरकेशररश्मिभिः=केशररूपचिकुरांशुभिः, विराजितं=सुशोभितम्, ( तं=तादृशं, हयम्=अश्वम्, क्षितिपाकशासनः=महीसुरपतिः, सः=नलः, आरुरोह=आरूढवान्, इत्यग्रिमेण सम्बन्धः ) । द्वितीयचरणे हिमांशुगभस्तिभिः साकं सादृश्यवर्णनादुपमा, तृतीयचरणे सम्भावनयोत्प्रेक्षा, चतुर्थचरणे रूपकालङ्कारः; एवमेतेषां त्रयाणां निरपेक्षतया स्थितिःसत्त्वात् संसृष्टिलङ्कारोऽत्र । वंशस्थं वृत्तम् ।

समासः—निशीथः=अर्धरात्रः अस्याः अस्तीति निशीथिनी=रात्रिः, निशीथिन्या नाथः, तस्य महांसि, सह=समानम् उदरं येषां ते सहोदराः, निशीथिनीनाथमहसा सहोदराः तैः निशीथिनीनाथमहःसहोदरैः। निगालं गच्छतीति निगालगः, तस्मात् निगालगात्। अन्तरे भवः आन्तरः, तेन आन्तरेण। अवटुं गच्छतीति तच्छीलः, तेन अवटुगामिना। केशरा एव केशाः, त एव रश्मयः, तैः केशर-केशरश्मिभिः।

(३९) अजस्रभूमीतटकुट्टनोद्गतैरुपास्यमानं चरणेषु रेणुभिः।
रयप्रकर्षाध्ययनार्थमागतैर्जनस्य चेतोभिरिवाऽणिमाङ्कितैः॥
१।५९॥

प्रसङ्गः—मदनमार्गणैः भृशं विद्धस्य दमयन्तीमुद्दिश्यानङ्गविकारं गोपायितुमक्षमस्यातएवान्तिकस्थोपवनविहारार्थं कृतनिश्चयस्य भूपतेः नलस्य गमनाय निदेशानन्तरं परिजनैरानीतस्य हयस्य वर्णनं विदधाति महाकविः श्रीहर्षोऽत्र।

अन्वयः—रयप्रकर्षाऽध्ययनार्थम् आगतैः अणिमाङ्कितैः जनस्य चेतोभिः इव अजस्रभूमीतटकुट्टनोद्गतैः रेणुभिः चरणेषु उपास्यमानम् इव ('तं हयं क्षितिपाकशासनः स आरुरोह' इत्यग्रिमेणान्वयः)।

व्याख्या—रयप्रकर्षाऽध्ययनाऽर्थम्=वेगातिशयज्ञानार्थम्, आगतैः=समासमायातैः, अणिमाङ्कितैः=अणुत्वपरिमाणविशिष्टैः, जनस्य=लोकस्य, चेतोभिः=मनोभिः, इव=यथा, अजस्रभूमीतटकुट्टनोद्गतैः=सततमहीतलविदारणोत्थितैः, रेणुभिः=धूलिभिः, चरणेषु=पादेषु, उपास्यमानं=सेव्यमानम्, इव=यथा ('तं=तादृशं, हयं=अश्वम्, क्षितिपाकशासनः=भूमहेन्द्रः, आरुरोह=आरूढवान्' इत्यग्रिमेण सम्बन्धः)। यथा शिष्यो गुरुचरणयोरुपास्ते, तथैवाणुपरिमाणैर्जनमनोभिश्चरणेषूपास्यमानम् इव तं हयं राजा नलः आरूढवानित्याशयः। नलस्याश्वः मनसा तुल्योवेगवानासीदित्यर्थो ध्वन्यते।

पद्येऽस्मिन् चित्तेषु शिष्यव्यवहारसमारोपात् समासोक्तिरलङ्कारः, 'समासोक्तिः समैर्यत्र कार्यलिङ्गविशेषणैः। व्यवहारसमारोपः प्रस्तुतेऽन्यस्य वस्तुनः'॥ (सा. द.) इति लक्षणात्। 'चेतोभिरिवे'त्यत्रोत्प्रेक्षा एवमुभयोरेकाश्रयाऽनुप्रवेशरूपः सङ्करालङ्कारोऽत्र। तल्लक्षणं यथा—

'अङ्गाङ्गित्वेऽलङ्कृतीनां तद्वदेकाश्रयस्थितौ ।
सन्दिग्धत्वे च भवति सङ्करस्त्रिविधः पुनः ।। ( सा. द. ) इति ।
वंशस्थं वृत्तम्, 'जतौ तु वंशस्थमुदीरितं जरौ' इति लक्षणात् ।

समासः—रयस्य प्रकर्षः, रयप्रकर्षः, रयप्रकर्षस्य अध्ययनम्, रयप्रकर्षाऽध्ययनाय इदम्, रयप्रकर्षाऽध्ययनाऽर्थम् । अणोर्भावः अणिमा, अणिम्ना अङ्कितानि, तैः अणिमाङ्कितैः । भूम्याः तटम्, भूमीतटस्य कुट्टनम्; अजस्रं यथा तथा भूमीतटकुट्टनम्, अजस्रभूमीतटकुट्टने उत्थिताः, तैः अजस्रभूमीतटकुट्टनोत्थितैः ।

( ४० ) चलाचलप्रोथतया महीभृते
स्ववेगदर्पानिव वक्तुमुत्सुकम् ।
अलं गिरा वेद किलायमाशयं
स्वयं हयस्येति च मौनमास्थितम् ।। १।६० ।।

प्रसङ्गः—द्रष्टव्यम्, श्लो० ३९ ।

अन्वयः—चलाचलप्रोथतया महीभृते स्ववेगदर्पान् वक्तुम् उत्सुकम् इव, अयं स्वयं हयस्य आशयं वेद किल, 'गिरा अलम्' इति मौनम्, आस्थितं च ( 'तं हयं क्षितिपाकशासनः स आरुरोह' इत्यग्रिमेणान्वयः ) ।

व्याख्या— चलाचलप्रोथतया=निसर्गःस्फुरमाणघोणतया, ( 'चलनं कम्पनं कम्प्रं चलं लोलं चलाचलम्' इत्यमरः, 'घोणा तु प्रोथमस्त्रियाम्' इत्यमरः) महीभृते=राज्ञे नलाय, स्ववेगदर्पान्=निजजवगर्वान्, वक्तुम्=कथयितुम्, उत्सुकम्=उत्कण्ठितम्, इव=यथा, अयं=नलः, स्वयं=आत्मना, हयस्य=वाजिनः ('घोटके वीतितुरगतुरङ्गाश्वतुरङ्गमाः । वाजिवाहार्वगन्धर्वहयसैन्धवसप्तयः' इत्यमरः ) आशयं=अभिप्रायम्, ( 'अभिप्रायश्छन्द आशयः' इत्यमरः ) वेद=जानाति, किल=खलु, अतः गिरा=वाण्या, अलं=पर्याप्तं, नरपतेः नलस्य स्वयमभिज्ञत्वात् वाचा प्रयोजनं नास्तीत्याशयः, इति=अस्मात् कारणात्, मौनं=तूष्णीकत्वम्, आस्थितं च=अधिगतश्च ( तं=तादृशं, हयं=घोटकम्, क्षितिपाकशासनः=महीसुरपतिः, सः=नलः,' आरुरोह आरूढवान्, इत्यग्रिमेण सम्बन्धः )। श्लोकस्यास्य पूर्वार्द्धे वाच्योत्प्रेक्षा, उत्तरार्द्धे प्रतीयमानोत्प्रेक्षा, एवमुभयोरुत्प्रेक्षयोर्निरपेक्षतया स्थितिःसत्वात् संसृष्टिरलङ्कारोऽत्र । वंशस्थं वृत्तम् ।

समासः—चलनशीलं चलाचलम्, चलाचलप्रोथस्य भावश्चलाचलप्रोथता, तया चलाचलप्रोथतया । महीं बिभर्तीति महीभृत्, तस्मै महीभृते । स्वस्य वेगः, तस्य दर्पाः, तान् स्ववेगदर्पान् । मुनेर्भावो मौनम्, तत् मौनम् ।

( ४१ ) महारथस्याऽध्वनि चक्रवर्तिनः
परानपेक्षोद्वहनाद्यशःसितम् ।
रदाऽवदातांऽशुमिषादनीदृशां
हसन्तमन्तर्बलमर्वतां रवेः ॥ १।६१ ॥

प्रसङ्गः—द्रष्टव्यम् श्लो० ३९ ।

अन्वयः—अध्वनि महारथस्य चक्रवर्तिनः पराऽनपेक्षोद्वहनात् यशःसितं रदाऽवदातांऽशुमिषात् अनीदृशां रवेः अर्वतां बलम् अन्तःहसन्तम् ( 'तं हयं क्षितिपाकशासनः स आरुरोह' इत्यग्रिमेणान्वयः ) ।

व्याख्या—अध्वनि=पथि, महारथस्य[1]=बृहत्स्यन्दनस्य, अयुतयोधिनो वा, चक्रवर्तिनः[2]=सार्वभौमस्य नलस्य, पराऽनपेक्षोद्वहनात्=अन्याऽश्वाऽपेक्षाऽभावेन वहनात्, एकाकित्वेन धारणादित्याशयः, यशःसितं=कीर्तिधवलं, रदाऽवदातांऽशुमिषात्=दन्तोज्ज्वलरश्मिकैतवात्, अनीदृशां=अनेतादृशानाम्, रवेः =भास्करस्य, अर्वतां=हयानां, [3]सप्तसंख्यकानामित्याशयः, बलं=शक्ति, अन्तः =निजमानसे, हसन्तं=उपहसन्तं, इव=यथा, स्थितं (तं=तादृशं, हयं=अश्वं, क्षितिपाकशासनः=भूमिशक्रः, सः=नलः, आरुरोह=आरूढवान् ) । श्लोकेऽस्मिन् अपह्नुत्या साकं 'हसन्तम्' इत्यस्मिन् पदे इवेति गम्यमानत्वात् प्रतीयमानोत्प्रेक्षालङ्कारः, भास्करघोटकेभ्यो नलाश्वस्योत्कर्षप्रतीयमानत्वात् व्यतिरेकालङ्कारः, एवमङ्गाङ्गिभावसत्वात् सङ्करालङ्कारोऽत्र । वंशस्थं वृत्तम् ।

समासः—महान् रथो यस्य सः, तस्य महारथस्य । चक्रे=राजमण्डले, मुख्यत्वेन वर्तते तच्छीलः चक्रवर्ती, तस्य चक्रवर्तिनः । न अपेक्षा अनपेक्षा, परे-

---

१—एको दश सहस्राणि योधयेद्यस्तु धन्विनाम् ।
शस्त्रशास्त्रप्रवीणश्च विज्ञेयः स महारथः ॥
अन्यच्च—
आत्मानं सारथिञ्चाश्वं रक्षन् युद्धयेत यो नरः ।
स महारथसंज्ञः स्यादित्याहुर्नीतिकोविदाः ॥

२—हरिश्चन्द्रो नलो राजा पुरुः कुत्सः पुरूरवाः ।
सागरः कार्तवीर्य्यश्च षडेते चक्रवर्तिनः ॥

३—जयोऽजयश्च विजयो जितप्राणो जितश्रमः ।
मनोजवो जितक्रोधो वाजिनः सप्तकीर्तिताः ॥
( भविष्योत्तरपुराण, आदित्यहृदयस्तोत्र )

षाम् अनपेक्षा, पराऽनपेक्षया उद्वहनं, तस्मात् पराऽनपेक्षोद्वहनात् । यशसा सितः तम् यशःसितम् । अवदाताश्च ते अंशवः, रदानाम् अवदातांऽशवः, रदाऽवदातांऽशूनां मिषं तस्मात् रदाऽवदातांऽशुमिषात् । न ईदृशः तेषाम् अनीदृशाम् ।

( ४२ ) सितत्विषश्चञ्चलतामुपेयुषो
मिषेणपुच्छस्य च केसरस्य च ।
स्फुटां चलच्चामरयुग्मचिह्नकै-
रनिह्नुवानं निजवाजिराजताम् ॥१।६२॥

प्रसङ्गः—द्रष्टव्यम्, श्लो० ३९ ।

अन्वयः—सितत्विषः चञ्चलताम् उपेयुषः पुच्छस्य केसरस्य च मिषेण चलच्चामरयुग्मचिह्नकैः स्फुटां निजवाजिराजताम् अनिह्नुवानम् ( तं हयं क्षितिपाकशासनः स आरुरोह ) ।

व्याख्या—सितत्विषः=शुभ्रकान्तियुतस्य, चञ्चलताम्=चपलताम्, उपेयुषः=अधिगतवतः, पुच्छस्य=लाङ्गूलस्य, केसरस्य च=ग्रीवास्थवालस्य च, मिषेण=छलेन, चलच्चामरयुग्मचिह्नकैः=चलत्प्रकीर्णकयुगललक्षणैः ( 'चामरं तु प्रकीर्णकम्' इत्यमरः ) स्फुटां=प्रथितां, निजवाजिराजताम्=स्वतुरगराजताम्, अनिह्नुवानम्=अनिषेधन्तम्, प्रकाशयन्तमित्याशयः, ( तं=तादृशं, हयं=अश्वं, क्षितिपाकशासनः=भूमिपुरन्दरः, सः=नलः, आरुरोह=आरूढवान् ) । अस्मिन् श्लोकेऽपह्नुति-उत्प्रेक्षेत्यलङ्कारद्वयोः संसृष्टिः । वंशस्थं वृत्तम् ॥

समासः—सिता त्विट् यस्य, तस्य सितत्विषः । चलत इति चलती, च ते चामरे, चलच्चामरयोर्युग्मम्, चिह्नानि एव चिह्नकानि, चलच्चामरयुग्मयोश्चिह्नकानि, तैः चलच्चामरयुग्मचिह्नकैः । वाजिनां राजा वाजिराजः, वाजिराजस्य भावो वाजिराजता, निजा चाऽसौ वाजिराजता, ताम् निजवाजिराजताम् । निह्नुत इति निह्नुवानः, न निह्नुवानः तम् अनिह्नुवानम् ।

( ४३ ) अपि द्विजिह्वाऽभ्यवहारपौरुषे
मुखाऽनुषक्तायतवल्गुवल्गया ।
उपपेयिवांसं प्रतिमल्लतां रय-
स्मये जितस्य प्रसभं गरुत्मतः ॥ १।६३ ॥

प्रसङ्गः—द्रष्टव्यम्, श्लो ३९ ।

अन्वयः—रयस्मये प्रसभं जितस्य गरुत्मतः द्विजिह्वाऽभ्यवहारपौरुषे अपि मुखाऽनुषक्तायतवल्गुवल्गया प्रतिमल्लताम् उयेयिवांसम् ( तं हयं क्षितिपाकशासनः स आरुरोह ) ।

व्याख्या—रयस्मये=वेगप्रयुक्ताहङ्कारे, ( 'दर्पोऽवलेपोऽवष्टम्भश्चित्तोद्रेकः स्मयो मदः' इत्यमरः ) प्रसभं=बलात्, जितस्य=निर्जितस्य, गरुत्मतः=गरुडस्य, द्विजिह्वाऽभ्यवहारपौरुषे अपि=पन्नगभक्षणपुरुषार्थे अपि, मुखाऽनुषक्तायतवल्गुवल्गया=वदनसंलग्नदीर्घचारुरज्ज्वा, प्रतिमल्लताम्=प्रतिद्वन्द्विताम्; उपेयिवांसं=अधिगतवन्तम्, (तं=तादृशं,, हयं=घोटकम्, क्षितिपाकसासनः महीपुरन्दरः, स=नलः, आरुरोह=आरूढवान्)। अस्मिन् श्लोके वैनतेयजयस्य सम्बन्धादसत्त्वेऽपि सम्वन्धोक्तेरतिशयोक्तिः, 'प्रतिमल्लताम् उपेयिवांसम्' इत्यत्र सादृश्याक्षेपादुपमालङ्कारः, एवमुभयोरलङ्कारयोर्निरपेक्षतया संस्थितिः सत्वात् संसृष्टिरलङ्कारोऽत्र । वंशस्थं वृत्तम् ।

समासः—रयस्य स्मयः, तस्मिन् रयस्मये । गरुतः सन्ति यस्य स गरुत्मान्, तस्य गरुत्मतः । द्वे जिह्वे येषां ते द्विजिह्वाः, द्विजिह्वानाम् अभ्यवहारः, स एव पौरुषं, तस्मिन् द्विजिह्वाऽभ्यवहारपौरुषे । मुखे अनुषक्ता, आयता चाऽसौ वल्गुः, आयतवल्गुश्चासौ वल्गा, मुखाऽनुषक्ता चाऽसौ आयतवल्गुवल्गा, तया मुखाऽनुषक्तायतवल्गुवल्गया । प्रतिकूलो मल्लः प्रतिमल्लः, प्रतिमल्लस्य भावः, तां प्रतिमल्लताम् ।

( ४४ ) स सिन्धुजं शीतमहः सहोदरं हरन्तमुच्चैःश्रवसः श्रियं हयम् ।
जिताऽखिलक्ष्माभृदनल्पलोचनस्तमारुरोह क्षितिपाकशासनः ॥
१।६४॥

प्रसङ्गः—मदनेषुभिः भृशं सन्तप्तस्य भैमीमुद्दिश्य कामविकारं निह्नोतुं स्वतोऽक्षमस्यातएवान्तिकस्थोपवनविहारार्थं विहितोद्योगस्य महीसुरपतिभूतस्य नरपतेः नलस्यादेशानन्तरं परिजनैरानीतमुच्चैश्रवसः शोभामनुहरन्तंहयं समुपर्णयन् तस्योपरि नैषधस्य समारोहणश्चारुतया वर्णयति महाकविः श्रीहर्षोऽत्र ।

अन्वयः—जिताऽखिलक्ष्माभृत् अनल्पलोचनः क्षितिपाकशासनः सः सिन्धुजं शीतमहःसहोदरम् उच्चैःश्रवसः श्रियं हरन्तं तं हयम् आरुरोह ।

व्याख्या—जिताऽखिलक्ष्माभृत्=स्वायत्तीकृताशेषनृपमण्डलः, अनल्पलोचनः=विशालाक्षः, अन्यत्र बहुनेत्रः सहस्राक्षः=पुरन्दरः, तेन तुल्यमिति भावः, क्षितिपाकशासनः=भूमिमहेन्द्रः, सः=प्रथितो नलः, सिन्धुजं=सिन्धुदेशप्रादुर्भूतं, समुद्राज्जनिलब्धश्च ( 'देशे नदविशेषेऽब्धौ सिन्धुर्ना सरिति स्त्रियाम्' इत्यमरः । ) शीतमहःसहोदरम्=चन्द्रभ्रातरम्, एकयोनित्वादिति भावः, अथवा

चन्द्रसदृशं शुभ्रवर्णमित्याशयः, उच्चैःश्रवसः=इन्द्राश्वस्य, श्रियं=सुषमां, हरन्तं=अनुकुर्वन्तं, तत्स्वरूपमित्यर्थः, तं=पूर्वनिगदितं, हयं=वाजिनम्, आरुरोह=समारूढवान् ।

अस्मिन् श्लोके 'अनल्पलोचनः' 'सिन्धुजम्' इत्यादिस्थलेषु श्लेषः, उच्चैःश्रवसः श्रियं हरन्तमिवेत्यत्रोपमा, 'क्षितिपाकशासनः' इत्यत्रातिशयोक्तिः, एतावता समेषां संसृष्टिरलङ्कारो विद्यते । वंशस्थवृत्तम्—'जतौ तु वंशस्थमुदीरितं जरौ' इति लक्षणात् ।

समासः—क्ष्मां बिभ्रतीति क्ष्माभृतः, जिताः अखिलाः क्ष्माभृतः=राजानः, येन, स जिताऽखिलक्ष्माभृत् । न अनल्पे, अनल्पे लोचने यस्य सः अनल्पलोचनः, अथवा न अल्पानि अनल्पानि=प्रचुराणि, अनल्पानि लोचनानि यस्य सः अनल्पलोचनः । शास्तीति शासनः पाकस्य=दैत्य भेदस्य, शासनः, पाकशासनः, क्षितौ पाकशासनः क्षितिपाकशासनः । सिन्धौ देशे जायते इति सिन्धुजः, तं सिन्धुजम् । अथवा सिन्धौ=समुद्रे जायत इति सिन्धुजः, तम् सिन्धुजम् शीतं महः=कान्तिः, यस्य सःशीतमहाः, शीतमहसः सहोदरः, तं शीतमहःसहोदरम् ।

( ४५ ) ततः प्रतीच्छ प्रहरेति भाषिणी परस्परोल्लासितशल्यपल्लवे ।
मृषामृधं सादिबले कुतूहलान्नलस्य नासीरगते वितेनतुः ॥ १।६८॥

प्रसङ्गः—राज्ञो नलस्य नगराद् बहिरागमनानन्तरं तस्य पृतनाद्वयोः मृषासंख्यस्य वर्णनञ्चारुतया विदधाति महाकविः श्रीहर्षोऽत्र ।

अन्वयः—ततः 'प्रतीच्छ प्रहर' इति भाषिणी परस्परोल्लासितशल्यपल्लवे नलस्य नासीरगते सादिबले कुतूहलात् मृषामृधं वितेनतुः ।

व्याख्या—ततः=नगराद्बहिरागमनानन्तरं, 'प्रतीच्छ=गृहाण, प्रहर=जहि' शस्त्रमिति शेषः, इति=एवं, भाषिणी=भाषमाणे, परस्परोल्लासितशल्यपल्लवे=मिथःप्रसारिततोमराग्रे ( 'शल्यं तोमरम्' इत्यमरः ), नलस्य=तन्नामकस्य नरपतेः, नासीरगते=सेनामुखाऽधिगते ( सेनामुखं तु नासीरम्' इत्यमरः ), सादिबले=तुरङ्गसैन्ये ( 'अश्वारोहास्तु सादिनः' इत्यमरः ), कुतूहलात्=कौतुकवशात्, मृषामृधं=मिथ्यासंख्यं, युद्धनाटकमित्याशयः ( मृधमायोधनं संख्यं' इत्यमरः ), वितेनतुः=चक्रतुः । उपमालङ्कारोऽत्र, वंशस्थं वृत्तम् ।

समासः—भाषेते तच्छीले इति- भाषिणी। परस्परम् उल्लासितानि शल्यानि पल्लवानि इव इति परस्परोल्लासितशल्यपल्लवे। नासीरं गते नासिर गते। अवश्यं सीदन्तीति सादिनः, सादिनां बले सादिबले।

(४६) प्रयातुमस्माकमियं कियत्पदं
धरा तदाम्भोधिरपि स्थलायताम्।
इतीव वाहैर्निजवेगदर्पितैः
पयोधिरोधक्षममुत्थितं रजः ॥ १।६९ ॥

प्रसङ्गः—निजवेगदर्पितैः राज्ञो नलस्य तुरङ्गमैः पयोधि समाच्छादनाय सातिशयेन रजसां समुत्थापनं विनिर्दिश्य तेषामश्वानां वेगं समुपवर्णयति महाकविरत्र।

अन्वयः—इयं धरा अस्माकं प्रयातुं कियत्पदम्, तत् अम्भोधिः अपि स्थलायताम् इति इव निजवेगदर्पितैः वाहैः पयोधिरोधक्षमं रजः उत्थितम्।

व्याख्या—इयं=पुरो दृश्यमाना, धरा=भूमिः, अस्माकं=सातिशयवेगेन धावतां वाहानां, प्रयातुं=प्रस्थातुं, कियत्पदम्=किं परिमाणं गन्तव्यं स्थानं, भवेदिति शेषः। तत्=तस्माद्धेतोः, अम्भोधिः अपि=सागरोऽपि, स्थलायतां =स्थलवदाचरतु, महीरेवास्त्विति भावः। इति=एवं मत्वा, इव=यथा, निजवेगदर्पितैः=आत्मजवदर्पदृप्तैः, वाहैः=वाजिभिः, पयोधिरोधक्षमं=सागर-समाच्छादनसक्षमं, रजः=पांशुः, ('पांशुर्ना द्वयो रजः' इत्यमरः) उत्थितम् समुत्थापितम्। उत्प्रेक्षाऽलङ्कारोऽत्र, वंशस्थं वृत्तम्।

समासः—कियन्ति पदानि यस्मिन् तद्यथा तथा कियत्पदम्। अम्भांसि धीयन्ते अत्र इति अम्भोधिः। दर्पः सञ्जातो येषां ते दर्पिताः, निजश्चासौ वेगः, तेन दर्पिताः, तैः निजवेगदर्पितैः। पयांसि धीयन्ते अस्मिन्निति पयोधिः, पयोधेः रोधः, तस्मिन् क्षमम्, पयोधिरोधक्षमम्।

(४७) हरेर्यदक्रामि पदैककेन खं
पदैश्चतुर्भिः क्रमणेऽपि तस्य नः।
त्रपा हरीणामिति नम्रिताऽऽननै-
र्न्यवर्ति तैरर्धनभःकृतक्रमैः ॥१।७०॥

प्रसङ्गः—'यदन्तरिक्षं हरे एकाकिना पादेनालङ्घि, तस्य गगनस्य हरिणाश्चतुर्भिर्पदैरतिक्रमणं त्रपोत्पादकमि'ति धिया सादिभिरनुगतस्य नलस्य

वाजिनां शौर्यप्रदर्शनपुरस्सरं तेषां परावर्तनमत्र चारुतया समुपवर्णयति कविपुङ्गवः श्रीहर्षः ।

अन्वयः—'यत् खं हरेः एककेन पदा अक्रामि, तस्य चतुर्भिः पदैः क्रमणे अपि हरिणां नः त्रपा' इति नम्रिताऽऽननैः अर्धनभःकृतक्रमैः तैः न्यवर्ति ।

व्याख्या—यत्, खम्=अन्तरिक्षम्, ( 'नभोऽन्तरिक्षं गगनमनन्तं सुरवर्त्म खम्' इत्यमरः ) हरेः=विष्णोः, एककेन=एकाकिना; पदा=पादेन, अक्रामि =अलङ्घि, तस्य=गगनस्य, चतुर्भिः=चतुःसंख्यकैः, पदैः=पादैः, क्रमणे अपि=लङ्घने कृते अपि, हरीणाम्=अश्वानां, विष्णूनां वा (यमानिलेन्द्रचन्द्रार्कविष्णुसिंहांशुवाजिषु । शुकादिकपिभेकेषु हरिर्ना कपिले त्रिषु' इत्यमरः ), नः =अस्माकं, त्रपा=व्रीडा, इति=अस्माद्धेतोः, नम्रिताऽऽननैः=निम्नीकृतवदनैः, अर्धनभःकृतक्रमैः=अर्द्धाकाशविहितपादविक्षेपैः, तैः=वाजिभिः, न्यवर्ति=निवृतम् । प्रतीयमानोत्प्रेक्षालङ्कारोऽत्र । वंशस्थं वृत्तम् 'जतौ तु वंशस्थमुदीरितं जरौ' इति लक्षणात् ।

समासः—एक एव एककः, तेन एककेन । नम्रं कृतं नम्रितम्, नम्रितम् आननं यैः तैः नम्रिताननैः अर्धं नभसः अर्धनभः, कृतः क्रमो यैस्ते कृतक्रमाः, अर्धनभसि कृतक्रमाः, तैः अर्धनभःकृतक्रमैः ।

(४८) चमूचरास्तस्य नृपस्य सादिनो जिनोक्तिषु श्राद्धतयेव सैन्धवाः।
विहारदेशं तमवाप्य मण्डलीमकारयन् भूरितुरङ्गमानपि॥ १।७१॥

प्रसङ्गः—'नरपतेः नलस्यानुयायिनोऽश्वारोहाः विहारदेशं समवाप्य निजाश्वान् मण्डलाकाररूपेण भ्रामयामासुः' इत्यस्य मनोरमं वर्णनं विदधाति महाकविः श्रीहर्षोऽत्र ।

अन्वयः—तस्य नृपस्य चमूचराः सैन्धवाः सादिनः जिनोक्तिषु श्राद्धतया इव तं विहारदेशम् अवाप्य तुरङ्गमान् भूरि मण्डलीम् अपि अकारयन् ।

व्याख्या—तस्य=पूर्वोक्तस्य, नृपस्य=भूपतेः नलस्य, चमूचराः=सेनाचराः, सैन्धवाः=सिन्धुदेशोद्भवाः, सादिनः=अश्वारोहाः, जिनोक्तिषु=बुद्धोपदेशेषु, श्राद्धतया=श्रद्धालुतया, इव=यथा, तं=प्रथितं, विहारदेशम्=सञ्चारभूमिम्, सुगतालयञ्च, ( 'विहारो भ्रमणे स्कन्धे लीलायां सुगतालये' इति विश्वः ) अवाप्य=संप्राप्य, तुरङ्गमान्=घोटकान्, भूरि=बहुलं, मण्डलीम् अपि=मण्डलाकारञ्च, मण्डलासनञ्च, अकारयन्=कारितवन्तः । 'बौद्धाः

स्वकर्मानुष्ठाने प्रायेण मण्डलानि कुर्वन्तीति प्रसिद्धिः। उत्प्रेक्षालङ्कारोऽत्र, वंशस्थं वृत्तम्।

**समासः**—चम्वां चरन्तीति चमूचराः। सिन्धौ भवाः सैन्धवाः। जिनस्य उक्तयः, तासु जिनोक्तिषु। श्रद्धा अस्ति येषां ये श्राद्धाः, श्राद्धानां भावः श्राद्धता, तया श्राद्धतया। विहारश्चासौ देशः, तम् विहारदेशम्।

(४९) विवेश गत्वा स विलासकाननं ततः क्षणात्क्षोणिपतिर्धृतीच्छया।
प्रवालरागच्छुरितं सुषुप्सया हरिर्घनच्छायमिवाऽम्भसां निधिम्॥
१।७४॥

**प्रसङ्गः**—'हरिर्यथा शयितुमभिलाषया पन्नगस्थानभूतं विद्रुमारुण्यभूषितं जलदकान्तियुतं पारावारमुपैति, तथैव नरपतिः नलः सन्तोषमधिगन्तुमिच्छया पल्लवारुण्यरञ्जितं सान्द्राऽनातपं क्रीडावनं प्रविष्टवान्' इति निगदन् महाकविः श्रीहर्षोऽत्र भूपतेः नलस्योपवनप्रवेशं वर्णयति।

**अन्वयः**—ततः हरिः सुषुप्सया विलासकाऽननं प्रवालरागच्छुरितं घनच्छायम् अम्भसां निधिम् इव स क्षोणिपतिः धृतीच्छया गत्वा प्रवालरागच्छुरितं घनच्छायं विलासकाननं क्षणात् विवेश।

**व्याख्या**—ततः=तदनन्तरं, हरिः=विष्णुः, सुषुप्सया=स्वप्तुमभिलाषया, विलासकाऽननं=पन्नगप्राणनं, प्रवालरागच्छुरितं=विद्रुमाऽऽरुण्यरूषितं, घनच्छायम्=जलदकान्ति, अम्भसां=अपाम्, निधिम्=शेवधिम्, इव=यथा, स=पूर्वोक्तः, क्षोणिपतिः=महीपतिः, नल इत्याशयः, धृतीच्छया=सन्तोषाधिगन्तुमिच्छया, गत्वा=गमनं विधाय, प्रवालरागच्छुरितं=पल्लवारुण्यरञ्जितं, ('प्रवालो वल्लकादण्डे विद्रुमे नवपल्लवे' इत्यमरः) घनच्छायं=सान्द्राऽनातपं, विलासकाननं=क्रीडावनं, क्षणात्=अल्पकालात्, विवेश=सम्प्रविष्टः पूर्णोपमालङ्कारोऽत्र, वंशस्थवृत्तम्।

**समासः**—स्वप्तुम् इच्छा सुषुप्सा, तया सुषुप्सया। बिले आसते इति बिलासकाः (सर्पाः), वबयोरभेदादिति, विलासकानाम् अननम् (प्राणनम्) तत् विलासकाऽननं। अथवा विलासस्य काननं विलासकाननम्। प्रवालानां रागः, प्रवालरागेण छुरितः, तम् प्रवालरागच्छुरितम्। घनस्य=मेघस्य इव छाया यस्य, तम् घनच्छायम्। अथवा घना छाया यस्य, तत् घनच्छायम्। क्षोणेः पतिः क्षोणिपतिः। धृतेः इच्छा, तया धृतीच्छया।

(५०) फलानि पुष्पाणि च पल्लवे करे वयोऽतिपातोद्गतवातवेपिते।
स्थितैः समाधाय महर्षिवार्द्धकाद्वने तदातिथ्यमशिक्षि शाखिभिः॥
१।७७॥

**प्रसङ्गः**—'मदनशरसन्तप्तस्य भूपतेः नलस्योपवनं प्राप्ते सति पल्लवपाणौ फलानि पुष्पाणि च समादाय शाखिभिरातिथ्यसत्कारं विहितम्' इत्यस्य वर्णनं चारुतया कुरुते महाकविरत्र।

**अन्वयः**—वयोऽतिपातोद्गतवातवेपिते पल्लवे करे फलानि पुष्पाणि च समाधाय स्थितैः वने शाखिभिः महर्षिवार्द्धकात् तदातिथ्यम् अशिक्षि।

**व्याख्या**—वयोऽतिपातोद्गतवातवेपिते पक्षिवातोद्भूतपवनप्रकम्पिते, महर्षिपक्षे—बाल्याद्यवस्थाऽपगमप्रादुर्भूतवातदोषकम्पिते, पल्लवे करे=किसलये एव हस्ते, महर्षिपक्षे—पल्लवे=किसलय इव कोमले, करे=पाणौ, फलानि=सस्यानि, पुष्पाणि च=कुसुमानि च, समाधाय=निधाय, स्थितैः=तिष्ठद्भिः, वने=उद्याने, शाखिभिः=विटपैः, वेदशाखाऽध्यायिभिश्च, महर्षिवार्द्धकात्=वृद्धमहर्षिसङ्घात्, तदातिथ्यं=नलातिथिसत्कारः, अशिक्षि=शिक्षितम्। अस्मिन् श्लोके 'पल्लवे करे' इत्यत्र 'व्यस्तरूपक-श्लेष-प्रतीयमानोत्प्रेक्षा' इत्येतेषामङ्गाङ्गिभावसत्वात् सङ्करालङ्कारः। वंशस्थं वृत्तम्।

**समासः**—वयसः अतिपातः, वयोतिपातेन उद्गतः, स चाऽसौ वातः, तेन वेपितः, तस्मिन् वयोऽतिपातोद्गतवातवेपिते। शाखाः सन्ति येषां ते, तैः शाखिभिः। महर्षिपक्षे—वेदशाखाः सन्ति येषां ते, तैः शाखिभिः। महान्तश्च ते ऋषयः महर्षयः, वृद्धानां समूहो वार्द्धकम्, महर्षीणां वार्द्धकं, तस्मात् महर्षिवार्द्धकात्। अतिथये इदम् आतिथ्यं, तस्य आतिथ्यं तदातिथ्यम्।

(५१) त्वदग्रसूचीसचिवः स कामिनोर्मनोभवः सीव्यति दुर्यशःपटौ।
स्फुटं च पत्त्रैः करपत्त्रमूर्तिभिर्वियोगहृद्दारुणि दारुणायते॥
१।८०॥

**प्रसङ्गः**—दमयन्तीमुद्दिश्य भृशं कामशरसन्तप्तो नरपतिः नलः उपवने केतककुसुममवलोक्य तमुपलभमानः सन् हेतुत्वमत्र विनिर्दिशति।

**अन्वयः**—त्वदग्रसूचीसचिवः स मनोभवः कामिनोः दुर्यशः पटौ सीव्यति, च करपत्त्रमूर्तिभिः पत्त्रैः वियोगिहृद्दारुणि दारुणायते।

**व्याख्या**—(हे केतके!) त्वदग्रसूचीसचिवः=त्वन्मूलसीवनीसहकारी, सः=प्रथितः, मनोभवः=मनसिजः, कामिनोः=तरुणदम्पत्योः, दुर्यशःपटौ=

अपयशवसने, सीव्यति=कण्टकस्यूतं विदधाति, च=किञ्च, करपात्रमूर्तिभिः= क्रकचाकारैः, ( 'क्रकचोऽस्त्री करपत्रम्' इत्यमरः ) पत्रैः=दलैः, वियोगिहृद्दारुणि=विरहिवक्षःकाष्ठे, दारुणायते=भीषणवत् आचरति। अस्मिन् श्लोके रूपकोपमयोः संसृष्टिः। वंशस्थं वृत्तम्।

समासः—तव अग्राणि त्वदग्राणि, त्वदग्राणि एव सूच्यः, त्वदग्रसूच्यः एव सचिवा यस्य सः त्वदग्रसूचीसचिवः। मनसि भवतीति मनोभवः। कामिनी च कामी च कामिनौ, तयोः कामिनोः। दुष्टे यशसी, ते एव पटौ, तौ दुर्यशपटौ। करपत्त्रस्य इव मूर्तिर्येषां तानि करपत्त्रमूर्तीनि, तैः करपत्त्रमूर्तिभिः। वियोगिनः हृत्, वियोगिहृत् एव दारु, तस्मिन् वियोगिहृद्दारुणि। दारुणवत् आचरति इति दारुणायते।

(५२) धनुर्मधुस्विन्नकरोऽपि भीमजापरं परागैस्तव धूलिहस्तयन्।
प्रसूनधन्वा शरसात्करोति मामिति क्रुधाऽऽक्रुश्यत तेन केतकम्॥
१।८१॥

प्रसङ्गः—स्मरशरसन्तप्तो राजा नलः उपवने उद्यानसंरक्षकेण संदर्शितस्य केतकप्रसूनस्योपालम्भनमपराधोद्‌घाटनपुरस्सरमत्रोपसंहरति।

अन्वयः—( हे केतक ! ) 'प्रसूनधन्वा धनुर्मधुस्विन्नकरः अपि तव परागैः धूलिहस्तयन् भीमजापरं मां शरसात् करोति' इति तेन क्रुधा केतकम् आक्रुश्यत।

व्याख्या—( हे केतक ! ) प्रसूनधन्वा=पुष्पचापः, धनुर्मधुस्विन्नकरः अपि=कोदण्डमकरन्दार्द्रपाणिः सन्नपि, तव=केतकीप्रसूनस्य, परागैः=रजोभिः, धूलिहस्तयन्=धूलिहस्तम् आत्मानं विदधन्, भीमजापरं=भैम्यासक्तं, मां= नलं, शरसात्=बाणाऽधीनं, करोति=विदधाति। इति=एवं प्रकारेण, तेन= भूपतिना नलेन, क्रुधा=क्रोधेन, केतकं=केतकीकुसुमं, आक्रुश्यत=आक्रुष्टः, निन्दितमित्याशयः। अन्यथा स्रस्तचापः सन् कामदेवः सः मां किं कुर्यादिति भावः। अतिशयोक्तिरलङ्कारोऽत्र, वंशस्थं वृत्तञ्च।

समासः—प्रसूनं धन्व यस्य सः प्रसूनधन्वा। अथवा प्रसूनं धनुः यस्य सः प्रसूनधन्वा। धनुषः मधुः, स्विन्नः करः यस्य सः, धनुर्मधुना स्विन्नकरः धनुर्मधुस्विन्नकरः। धूलियुक्तो हस्तः धूलिहस्तः, धूलिहस्तं कुर्वन् धूलिहस्तयन्। भीमाज्जाता भीमजा, भीमजायां परः, तत् भीमजापरं।

(५३) नवा लता गन्धवहेन चुम्बिता करम्बिताङ्गी मकरन्दशीकरैः
दृशा नृपेण स्मितशोभिकुड्मला दराऽऽदराभ्यां दरकम्पिनी पपे ॥
१।८५

**प्रसङ्गः**—'कन्दर्पेणाऽतिमात्रं सन्तापितो नरपतिः नलः एकान्तसेवनाय
पवनं सम्प्राप्य काञ्चिल्लतां नायिकामिव-संदृष्टवान्' इत्यस्य चारुतया वर्णनं
विदधाति महाकविरत्र ।

**अन्वयः**—गन्धवहेन चुम्बिता मकरन्दशीकरैः करम्बिताऽङ्गी स्मितशोभि-
कुड्मला दरकम्पिनी नवालता नृपेण दराऽऽदराभ्यां दृशा पपे ।

**व्याख्या**—गन्धवहेन=पवनेन, चन्दनाद्यनुलिप्तेन पुंसा च, चुम्बिता=
स्पृष्टा, विहिताननसंयोगा च, मकरन्दशीकरैः=पुष्परसकणैः, करम्बिताङ्गी=
मिश्रिताऽवयवा, कस्यचिन्मानवस्य संस्पर्शेन स्विन्नाङ्गी च, ('करम्बितं मिश्रितं
स्यात् खचिते च' इति त्रिकाण्डशेषः ) स्मितशोभिकुड्मला=विकासरम्यमुकुला,
मन्दहासमधुरदन्तमुकुला च, दरकम्पिनी=वायुसंस्पर्शात् ईषत्कम्पिनी, पुरुष-
संस्पर्शात् सात्विकवेपथुमती च, नवा=प्रत्यग्रा, लता=वल्ली, लतासदृशी
कान्ता च, नृपेण=भूपतिना नलेन, दराऽऽदराभ्यां=भयतृष्णाभ्याम्, ताभ्या-
मुपलक्षितेन सता, कामोद्दीपनाद् भीतिः, प्रियासादृश्यात् आदरश्चेत्याशयः,
( 'दरोऽस्त्री शङ्खभीगर्तेस्वल्पार्थेत्वव्ययम्' इति वैजयन्ती ) दृशा=लोचनेन
करणेन, पपे=पीता, सतृष्णयाऽवलोकितेत्याशयः । अत्र प्रस्तुतविशेषणसाम्यादप्र-
प्रस्तुतनायिकाप्रतीतेः समासोक्तिरलङ्कारः 'विशेषणस्य तौल्येन यत्र प्रस्तुतवर्ण-
नात् । अप्रस्तुतस्य गम्यत्वे सा समासोक्तिरिष्यते' ॥ इति लक्षणात् । वंशस्थं
वृत्तम्, तल्लक्षणं यथा—'जतौ तु वंशस्थमुदीरितं जरौ' इति ।

**समासः**—गन्धं वहतीति गन्धवहः, येन गन्धवहेन । मकरन्दस्य शीक-
रैः मकरन्दशीकरैः । करम्बितानि अङ्गानि यस्या सा करम्बिताऽङ्गी । स्मित-
वत् शोभन्ते इति स्मितशोभिनः, स्मितशोभिनः कुड्मला यस्याः सा स्मित-
शोभिकुड्मला । दरम्=ईषत्, कम्पते, तच्छीला दरकम्पिनी च । दरं च आद-
रश्च दराऽऽदरौ, ताभ्यां दराऽऽदराभ्याम् ।

(५४) विचिन्वतीः पान्थपतङ्गहिंसनैरपुण्यकर्माण्यलिकज्जलच्छलात्
व्यलोकयच्चम्पककोरकावलीः स शम्बराऽरेर्बलिदीपिका इव ॥
१।८६

**प्रसङ्गः**—'एकान्तसेवनप्रियो नरपतिः नलः भृशं मदनेषुभिः

वनुपवनं समुपेत्य चम्पककोरकावलीरपश्यदि'त्यस्य चारुतया वर्णनं कुरुते महाकविरत्र।

अन्वयः—स अलिकज्जलच्छलात् पान्थपतङ्गहिंसनैः अपुण्यकर्माणि विचिन्वतीः शम्बराऽरेः बलिदीपिका इव चम्पककोरकाऽऽवलीः व्यलोकयत्।

व्याख्या—सः=पूर्वोक्तो नलः, अलिकज्जलच्छलात्=षट्पदाऽञ्जनमिषात्, पान्थपतङ्गहिंसनैः=पथिकविहगमारणैः अपुण्यकर्माणि=पापक्रियाः, विचिन्वतीः=सङ्गृह्णतीः, हिंसापापकारिणीरित्याशयः, शम्बराऽरेः=मन्मथस्य, बलिदीपिकाः=पूजाप्रदीपान्, इव=यथा, चम्पककोरकाऽऽवलीः=चम्पककुसुमकलिकाश्रेणीः, व्यलोकयत्=अपश्यत्। अस्मिन् श्लोके 'रूपक-कैतवाऽपह्नुति-उत्प्रेक्षा-उपमा' इत्येतेषामलङ्काराणामङ्गाङ्गिभावसत्वात् सङ्करालङ्कारः। वंशस्थं वृत्तम्।

समासः—अलयः कज्जलानि इव अलिकज्जलानि, अलिकज्जलानां छलं, तस्मात् अलिकज्जलच्छलात्। पन्थानं नित्यं गच्छन्तीति पान्थाः, पान्था एव पतङ्गाः पान्थपतङ्गानां हिंसनानि, तैः पान्थपतङ्गहिंसनैः। पुण्यानि च तानि कर्माणि, न पुण्यकर्माणि, तानि अपुण्यकर्माणि। विचिन्वन्तीति विचिन्वन्त्यः, ताः विचिन्वतीः। शम्बरस्य अरिः, तस्य शम्बराऽरेः। बलेः दीपिकाः, ताः बलिदीपिकाः। कोरकाणाम् आवल्यः, चम्पकानां कोरकावयः, ताः चम्पककोरकाऽवलीः।

(५५) अमन्यताऽसौ कुसुमेषु गर्भजं परागमन्धङ्करणं वियोगिनाम्।
स्मरेण मुक्तेषु पुरा पुराऽरये तदङ्गभस्मेव शरेषु सङ्गतम्॥ १।८७॥

प्रसङ्गः—'नरपतिः नलः पुष्पाणामाभ्यन्तरे संस्थितं परागं शिवाङ्गसंसक्तभस्मानमिवोत्प्रेक्षितवान्' इत्यस्य वर्णनं विदधाति महाकविरत्र।

अन्वयः—असौ कुसुमेषुगर्भजं वियोगिनाम् अन्धङ्करणं परागं पुरा स्मरेण पुराऽरये मुक्तेषु शरेषु सङ्गतं तदङ्गभस्म इव अमन्यत।

व्याख्या—असौ=नलः, कुसुमेषुगर्भजं=कुसुमरूपशराऽऽभ्यन्तरजातं, वियोगिनां=विरहिणां, अन्धङ्करणं=नेत्रोपघातकं, परागं=सुमनोरजः, पुरा=पूर्वं, स्मरेण=मनसिजेन, पुराऽरये=शङ्कराय, मुक्तेषु=निक्षिप्तेषु, शरेषु=बाणेषु, सङ्गतं=संसक्तं, तदङ्गभस्म=शिवाङ्गावयवभसितम्, इव=यथा, अमन्यत=समुत्प्रेक्षितवान्। उत्प्रेक्षालङ्कारोऽत्र, वंशस्थं वृत्तम्।

समासः—कुसुमानि एव इषवः, गर्भे जातः गर्भजः, कुसुमेषूणां गर्भजः,

तम् कुसुमेषुगभंजम् । अनन्धान् अन्धान् कुर्वन्ति अनेन इति, अन्धङ्करण
पुराणाम् अरि:, तस्मै पुराऽरये । तस्य अङ्गं, तस्मिन् भस्म तदङ्गभस्म।

(५६) पिकाद्वने शृण्वति भङ्गहुङ्कृतैर्दशामुदञ्चत्करुणं वियोगिनाम्
अनास्थया सूनकरप्रसारिणीं ददर्श दूनः स्थलपद्मिनीं नलः
॥८८॥

**प्रसङ्गः**—मन्मथशरेण भृशं सन्तप्तस्य स्वमानसक्लमं दूरीकरणायोपवनमु
पेतस्य नरपतेः नलस्य कानने स्थलकमलिनीसन्दर्शनं वर्णयति महाकविरत्र।

**अन्वयः**—दूनः नलः वने पिकात् भृङ्गहुङ्कृतैः वियोगिनां दशाम् उद
त्करुणं शृण्वति अनास्थया सूनकरप्रसारिणीं स्थलपद्मिनीं ददर्श ।

**व्याख्या**—दूनः=सन्तप्तः, दमयन्तीवियोगेनेति भावः, नलः=तन्नाम
नृपतिः, वने=उपवने श्रोतरि, पिकात्=कोकिलात्, वक्तुः सकाशात्, भृङ्ग
हुङ्कृतैः=द्विरेफहुङ्कारैः, वियोगिनां=विरहिणां, दशाम्=दुःखावस्थां, उद
ञ्चत्करुणम्=विकसद्वृक्षविशेषमुद्यत्कृपञ्च, यथा तथा शृण्वति=आकर्णयति
सति, अनास्थया=श्रोतुमनिच्छया, सूनकरप्रसारिणीं=कुसुमरूपकरविस्ता
रिणीं, स्थलपद्मिनीं=स्थलकमलिनीं, ददर्श=सन्दृष्टवान् । अत्र 'समासोक्ति
रूपक-प्रतीयमानोत्प्रेक्षा' इत्येतेषामलङ्काराणामङ्गाङ्गिभावसत्वात् सङ्करा
लङ्कारः । वंशस्थं वृत्तञ्च ।

**समासः**—उदञ्चन्ती ( उद्यन्ती ) करुणा यस्मिन् ( कर्मणि ) तद् यथा तथा
उदञ्चत्करुणम् । अथवा उदञ्चन्तः=विकसन्तः, करुणाः=वृक्षविशेषाः, यस्मिं
स्तद् यथा तथा उदञ्चत्करुणम् । न आस्था अनास्था, तया अनास्थया । सूनम्
एव करः, सुनकरं प्रसारयतीति तच्छीला, ताम् सूनकरप्रसारिणीम् ।

( ५७ ) अलिस्रजा कुड्मलमुच्चशेखरं
निपीय चाम्पेयमधीरया दृशा ।
स धूमकेतुं विपदे वियोगिना-
मुदीतमातङ्कितवानशङ्कत ॥ ११९१ ॥

**प्रसङ्गः**—'मन्मथशरसन्तप्तो नरपतिः नलः मानसविनोदाय काननमुपेतः
तत्रस्थितां चम्पककलिकां प्रेक्ष्य वियोगिनां विनाशायोद्गतं धूमकेतोरिवामन्यत'
इत्यस्य वर्णनं चारुतया विदधाति महाकविः श्रीहर्षोऽत्र ।

**अन्वयः**—अलिस्रजा उच्चशेखरं चाम्पेयं कुड्मलम् अधीरया दृशा निपीय
आतङ्कितवान् स वियोगिनां विपदे उदीतं धूमकेतुम् अशङ्कत ।

**व्याख्या**—अलिस्रजा=द्विरेफपङ्क्त्या, उच्चशेखरम्=उन्नतशिरोभूषणम्, अलिमलिनाङ्गमित्याशयः, चाम्पेयं=चम्पकविकारं, कुड्मलम्=मुकुलम्, अधीरया=धैर्यविरहितया, दृशा=लोचनेन, निपीय=सादरं वीक्ष्य, आतङ्कितवान्=भीत्यान्वितः, सः=पूर्वोक्तो नलः, वियोगिनां=विरहिणां, विपदे=विनाशद्योतनाय, उदीतं=उत्थितं, धूमकेतुं=अमङ्गलजनकं तारापुञ्जम्, अशङ्कत=शङ्कितवान्। उत्प्रेक्षालङ्कारोऽत्र, वंशस्थं वृत्तम्।

**समासः**—अलीनां स्रक्, तया अलिस्रजा। उच्चः शेखरो यस्य, तम्, उच्चशेखरम्। चम्पायाः अपत्यं पुमान् चाम्पेयः, तम् चाम्पेयम्। न धीरा अधीरा, तया अधीरया। धूमप्रधानः केतुः, तं धूमकेतुम्।

(५८) तदङ्गमुद्दिश्य सुगन्धि पातुकाः
शिलीमुखालीः कुसुमाद् गुणस्पृशः।
स्वचापदुर्निर्गतमार्गणभ्रमात्
स्मरः स्वनन्तीरवलोक्य लज्जितः॥ १।९३॥

**प्रसङ्गः**—'पुष्पेभ्योऽधिकं सुगन्धिसमन्वितं नलाऽङ्गमुद्दिश्य शब्दं कुर्वन्तीः द्विरेफावलीः वीक्ष्य मनसिजो निजकुसुमकोदण्डविषमनिःसृतबाणभ्रान्तेरतीव लज्जितोऽभवत्' इति निगदन् महाकविः श्रीहर्षोऽत्र नलाङ्गस्य पुष्पेभ्यः समधिकं सुगन्धि सन्दर्शयति।

**अन्वयः**—सुगन्धि तदङ्गम् उद्दिश्य गुणस्पृशः कुसुमात् पातुकाः स्वनन्तीः शिलीमुखालीः अवलोक्य स्मरः स्वचापदुर्निर्गतमार्गणभ्रमात् लज्जितः (अभवत्)।

**व्याख्या**—सुगन्धि=शोभनगन्धयुतं, तदङ्गम्=नैषधाऽङ्गम्, उद्दिश्य=अभिलक्ष्य, गुणस्पृशः=गन्धादिस्पृशः, मौर्वीस्पृशश्च, कुसुमात्=पुष्पात्, पातुकाः=धावन्तीः, स्वनन्तीः=शब्दं कुर्वन्तीः, शिलीमुखालीः=द्विरेफावलीः, शरपङ्क्तीश्च, अवलोक्य=वीक्ष्य, स्मरः=मन्मथः, स्वचापदुर्निर्गतमार्गणभ्रमात्=निजसुमनशरासनविषमनिःसृतशरभ्रान्तेः, लज्जितः=व्रीडितः, अभवदिति शेषः। अस्मिन् श्लोके श्लेष-भ्रान्तिमान्-उत्प्रेक्षेत्येतेषामलङ्काराणामङ्गाङ्गिभावसत्वात् सङ्करालङ्कारः। वंशस्थं वृत्तम् 'जतौ तु वंशस्थमुदीरितं जरौ' इति लक्षणात्।

**समासः**—शोभनः गन्धः यस्य तत् सुगन्धि। तस्य अङ्गं, तत् तदङ्गम्। गुणं=गन्धादिं मौर्वीं च, स्पृशन्तीति, ताः गुणास्पृशः। पतन्तीति पातुकाः।

स्वनन्तीति स्वनन्त्यः, ताः स्वनन्तीः। शिलीमुखानां=भ्रमराणां बाणानां वा, आल्यः, ताः शिलीमुखालीः। स्वस्य चापः, दुर्निर्गताश्च ते मार्गणाः, स्वचापात् दुर्निर्गतमार्गणाः, तेषां भ्रमः तस्मात् स्वचापदुर्निगतमार्गणभ्रमात्।

(५९) मरुल्ललत्पल्लवकण्टकैः क्षतं
समुच्चरच्चन्दनसारसौरभम् ।
स वारनारी कुचसञ्चितोपमं
ददर्श मालूरफलं मालूरफलं पचेलिमम् ॥ १।९४॥

**प्रसङ्गः**—'स्मरेषुणा संविद्धो नरपतिः नलः स्वान्तःसुखसमधिगताय निजोपवनमुपेत्य गणिकाकुचाधिगतसादृश्यं पचेलिमं मालूरफलमपश्यत्' इत्यस्य वर्णनं चारुतयाऽत्र विदधातिः महाकविः।

**अन्वयः**—स मरुल्ललत्पल्लवकण्टकैः क्षतं समुच्चरच्चन्दनसारसौरभं वारनारीकुचसञ्चितोपमं पचेलिमं मालूरफलं ददर्श।

**व्याख्या**—स=पूर्वोक्तो नलः, मरुल्ललत्पल्लवकण्टकैः=पवनप्रचलत्पल्लवतीक्ष्णाग्राऽवयवैः, अन्यत्र विलसद्विटमखैः क्षतमित्यवगम्यते, क्षतं=विलिखितं, समुच्चरच्चरच्चन्दनसारसौरभं=प्रसर्पच्छ्रीखण्डसारसौगन्ध्यम्, अतएव, वारनारीकुचसञ्चितोपमं=गणिकास्तनसम्पादितसादृश्यं, पचेलिमं=स्वतःपक्वं, मालूरफलं=विल्वफलं, ('बिल्वे शाण्डिल्यशैलूषौ मालूरश्रीफलावपि' इत्यमरः) ददर्श=अवलोकितवान्। उपमालङ्कारोऽत्र, वंशस्थं वृत्तञ्च।

**समासः**—लसन्ति च तानि पल्लवानि, मरुता लसत्पल्लवानि, तेषां कण्टकाः, तैः मरुल्लसत्पल्लवकण्टकैः। चन्दनस्य सारः, तस्य सौरभम्, समुच्चरत् चन्दनसारसौरभं यस्य, तत् समुच्चरच्चन्दनसारसौरभम्। वारस्य नारी वारनारी, तस्याः कुचः, सञ्चिता उपमा यस्य तत्, वारनारीकुचेन सञ्चितोपमं, तत् वारनारीकुचसञ्चितोर्पमम्। मालूरस्य फलं, तत् मालूरफलम्।

(६०) मुनिद्रुमः कोरकितः शितिद्युतिर्वनेऽमुनाऽमन्यत सिंहिकासुतः।
तमिस्रपक्षत्रुटिकूटभक्षितं कलाकलापं किलवैधवं वमन्॥
१।९६॥

**प्रसङ्गः**—स्वान्तःसुखाधिगतायोपवनमुपेतस्य स्मरशरसन्तप्तस्य नरपतेः नलस्यागस्त्यवृक्षसंदर्शनं वर्णयति महाकविः श्री हर्षोऽत्र।

**अन्वयः**—अमुना वने कोरकितः शितिद्युतिः मुनिद्रुमः तमिस्रपक्षत्रुटिकूटभक्षितं वैधवं कलाकलापं वमन् सिंहिकासुतः अमन्यत किल।

**व्याख्या**—अमुना=भूपतिना नलेन, वने=उपवने, कोरकितः=संजातकोरकः। शितिद्युतिः=कृष्णच्छविः, पत्त्रेषु इति शेषः, मुनिद्रुमः=अगस्त्यविटपः, तमिस्रपक्षत्रुटिकूटभक्षितं=कृष्णपत्रक्षयव्याजगिलितं, वैधवं=चन्द्रसम्बन्धि, कलाकलापं=कलासमूहं, वमन्=उद्गिरन्, सिंहिकासुतः=राहुः, अमन्यत=ज्ञातः, किल=निश्चयेन। अस्मिन् श्लोके कैतवापह्नुतिरुत्प्रेक्षयोरङ्गाङ्गिभावसत्वात् सङ्करालङ्कारः। वंशस्थं वृत्तम्।

**समासः**—कोरकाः सञ्जाता अस्य इति कोरकितः। शिति द्युतिः यस्य सः शितिद्युतिः। तमिस्रस्य पक्षः, तस्य त्रुटिः, तस्याः कूटम्, तेन भक्षितः, तम् तमिस्रपक्षत्रुटिकूटभक्षितम्। विधोः अयं वैधवः तम् वैधवम्। कलानां कलापः तम् कलाकलापम्। सिंहिकायाः सुतः, सिंहिकासुतः।

(६१) गता यदुत्सङ्गतले विशालतां
द्रुमाः शिरोभिः गलगौरवेण ताम्।
कथं न धात्रीमतिमात्रनामितैः
स वन्दमानानभिनन्दति स्म तान्॥ ११८॥

**प्रसङ्गः**—स्वान्तःसुखसमधिगतायोपवनमुपेयुषा कन्दर्पशरापविद्धेन नरपतिना नलेन विहितं द्रुमाभिनन्दनं पेशलतया प्रस्तौति महाकविरत्र।

**अन्वयः**—द्रुमाः यदुत्सङ्गतले विशालतां गतां, तां धात्रीं फलगौरवेण अतिमात्रनामितैः शिरोभिः वन्दमानान् तान् स कथं न अभिनन्दति स्म।

**व्याख्या**—द्रुमाः=विटपाः, यदुत्सङ्गतले=यदङ्कप्रदेशे, विशालतां=विवृद्धि, गताः=सम्प्राप्ताः, तां=प्रथितां, धात्रीं=पयःपानकर्त्रीं, भुवञ्च, गलगौरवेण=फलभारेण, सुकृतातिशयेन च हेतुना, अतिमात्रनामितैः=अत्यर्थप्रह्वीकृतैः, शिरोभिः=अग्रभागैः, उत्तमाङ्गैश्च, वन्दमानान्=स्पृशतः, अभिवादयमानांश्च, तान्=वृक्षान्, सः=नलः, कथं=केन प्रकारेण, न=नहि, अभिनन्दतिस्म=अस्तौषीत्, अपितु अभिननन्द एवेत्याशयः। विशेषणसामर्थ्यात् पुत्रप्रतीतेः समासोक्तिरलङ्कारोऽत्र। वंशस्थं वृत्तम्—'जतौ तु वंशस्थमुदीरितं जरौ' इति लक्षणात्।

**समासः**—उत्सङ्गस्य तलम्, यस्या उत्सङ्गतलं, तस्मिन् यदुत्सङ्गतले। विशालस्य भावो विशालता, ताम् विशालताम्। धयन्ति याम् इति धात्री, तां धात्रीम्। फलानां गौरवं, तेन फलगौरवेण। अतिमात्रनामितानि, तैः अतिमात्रनामितैः। वन्दन्त इति वन्दमानाः, तान् वन्दमानान्।

( ६२ ) नृपाय तस्मै हिमितं वनाऽनिलैः
सुधीकृतं पुष्परसैरहर्महः ।
विनिर्मितं केतकरेणुभिः सितं
वियोगिनेऽधत्त न कौमुदीमुदः ॥१।९९॥

**प्रसङ्गः**—अनङ्गेषुणा भृशं सन्तप्ताय वियोगिने राज्ञे नलाय उद्यानवातैः शीतलीकृतं, मकरन्दैः सुधीकृतं, केतककुसुमधूलिभिः धवलीकृतं दिवसतेजः आतपो वा चन्द्रिकेव मुदः नोत्पादयामास । इति निगदन् महाकविः श्रीहर्षोऽत्र नरपतेः नलस्य भैमीनियोगजनितामवस्थां पेशलतया प्रस्तौति ।

**अन्वयः**—वनाऽनिलैः हिमितं पुष्परसैः सुधीकृतं, केतकरेणुभिः सितं विनिर्मितम् अहर्महः ( एव ) कौमुदीवियोगिने तस्मै नृपाय मुदः न अधत्त ।

**व्याख्या**—वनाऽनिलैः=उपवनपवनैः, हिमितं = शीतलं विहितं, पुष्परसैः =कुसुमपरागैः, मकरन्दैरित्याशयः, उद्यानवाताऽऽनीतैरिति शेषः, सुधीकृतं= अमृतीकृतं, तथा, केतकरेणुभिः=केतकीकुसुमरजोभिः, सितं=शुभ्रं, विनिर्मितं =विहितं, ( एवं ) अहर्महः=दिवसतेजः, आतपः एव, कौमुदी=चन्द्रिका, वियोगिने=विरहिणे, तस्मै=पूर्वकथिताय, नृपाय=राज्ञे नलाय, मुदः= प्रमोदान्, न=नहि, आधत्त=विहितवती, प्रत्युतोद्दीपकैवाभूदित्याशयः । अस्मिन् श्लोकें 'अहर्महः' इत्यत्र कौमुद्या आरोपसत्वात् रूपकालङ्कारोऽत्र वंशस्थं वृत्तम् ।

**समासः**—वनस्य अनिलाः, तैः वनाऽनिलैः । हिमं कृतं हिमितम् । पुष्पाणां रसाः, तैः पुष्परसैः । असुधा सुधा यथा सम्पद्यते तथा कृतम्, सुधीकृतम् । केतक्याः विकाराः=पुष्पाणि, केतकानि, केतकानां रेणवः, तैः केतकरेणुभिः । अह्नः महः, अहर्महः ।

( ६३ ) वियोगभाजोऽपि नृपस्य पश्यता
तदेव साक्षादमृतांऽशुमाननम् ।
पिकेन शेषाऽरुणचक्षुषा मुहुः
कुहूरुताऽऽहूयत् चन्द्रवैरिणी ॥१।१००॥

**प्रसङ्गः**—'भैमीवियोगदुःखसन्तप्तस्यापि नरपतेः नलस्याननं चन्द्रवद मनोरममासीदिति पश्यन् पिको मुहुर्मुहुः स्व कुहूरिति शब्देन चन्द्रवैरिणीममावास्यामाहूतवान्' इति प्रोच्य महाकविरत्र भूपतेः नलस्य सौन्दर्यातिशायित्वं सन्दर्शयति ।

**अन्वयः**—वियोगभाजः अपि नृपस्य तत् आननम् एव साक्षात् अमृतांऽशुं पश्यता ( अत एव ) रोषाऽरुणचक्षुषा पिकेन कुहूरुता चन्द्रवैरिणी मुहुः आहूयत ।

**व्याख्या**—वियोगभाजोऽपि=वियोगिनोऽपि, नृपस्य=नरपतेः नलस्य, तत्=प्रथितम्, आननम्=मुखम्, एव=निश्चयेन, साक्षात्=प्रत्यक्षम्, अमृतांऽशुं=सुधांऽशुं, पश्यता=अवलोकयता, (अतएव) रोषारुणचक्षुषा=कोपरक्तलोचनेन, पिकेन=कोकिलेन, कुहूरुता=कुहूशब्देन, अमावस्यावाचकशब्देन वा, चन्द्रवैरिणी=कुहूः, अमावस्या इत्याशयः, मुहुः=अभीक्ष्णं, आहूयत=आहूता (किम् ?) । अस्मिन् श्लोके रूपक-प्रतीयमानोत्प्रेक्षयोरलङ्कारयोरङ्गाङ्गिभावसत्त्वात् सङ्करालङ्कारः । वंशस्थं वृत्तम् ।

**समासः**—वियोगं भजतीति वियोगभाक्, तस्य वियोगभाजः । अमृतम् इव अंशुः यस्य सः, तम् अमृतांऽशुम् । पश्यतीति पश्यन्, तेन पश्यता । अरुणे चक्षुषी यस्य सः, रोषात् अरुणचक्षुः, तेन रोषाऽरुणचक्षुषा । कुहूश्चासौ रुत् तया कुहूरुता चन्द्रस्य वैरिणी चन्द्रवैरिणी ।

( ६४ ) अशोकमर्थाऽन्वितनामताऽऽशया
गताञ्शरण्यं गृहशोचिनोऽध्वगान् ।
अमन्यताऽवन्तमिवैष पल्लवैः
प्रतीष्टकामज्वलदस्त्रजालकम् ॥१।१०१॥

**प्रसङ्गः**—स्मरशरसन्तप्तस्योपवनमुपेतस्य नरपतेः नलस्याशोकवृक्षसन्दर्शनमत्र वर्णयति महाकविः ।

**अन्वयः**—एष पल्लवैः प्रतीष्टकामज्वलदस्त्रजालकम् अशोकम् अर्थाऽन्वितनामताशया शरण्यं गतान् गृहशोचिनः अध्वगान् अवन्तम् इव अमन्यत ।

**व्याख्या**—एष=नलः, पल्लवैः=किसलयैः, प्रतीष्टकामज्वलदस्त्रजालकं=प्रतिगृहीतकन्दर्पदीप्यमानायुधक्षारकम्, पल्लवसंच्छन्नकुसुमरूपकामास्त्रम् इत्याशयः, अशोकं=अशोकविटपं, वञ्जुलापरनामधेयम्, अर्थाऽन्वितनामताऽऽशया=अन्वर्थाभिधानवताऽभिलाषेण, (अस्मानप्यशोकान् करिष्यतीति वाञ्छया) शरण्यं=रक्षणसाधुं, (तम्=अशोकम्) गतान्=प्राप्तान्, गृहशोचिनः=दाराननुशोचन्तः, ( 'गृहः पत्न्यां गृहे स्मृतः' इति विश्वः ) अध्वगान्=पथिकान्, प्रोषितान् वा, अवन्तं=रक्षन्तम्, इव=यथा, अमन्यत=ज्ञातवान् । उत्प्रेक्षाऽलङ्कारोऽत्र । वंशस्थं वृत्तम् ।

समासः—ज्वलन्ति च तानि अस्त्राणि ज्वलदस्त्राणि, तेषां जालकानि, कामस्य ज्वलदस्त्रजालकानि, प्रतीष्टानि कामज्वलदस्त्रजालकानि येन तम्, प्रतीष्टकामज्वलदस्त्रजालकम् । अविद्यमानः शोकः यस्य सः, तम् अशोकम् । नाम्नो भावो नामता, अर्थेन अन्विता, अर्थाऽन्विता चाऽसौ नामता, तस्या आशा तया अर्थाऽन्वितनामताऽऽशया । शरणे साधुः शरण्यः, तं शरण्यम् । गृहं शोचन्तीति गृहशोचिनः, तान् गृहशोचिनः । अध्वानं गच्छन्तीति अध्वगाः, तान् अध्वगान् । अवतीति अवन्, तं अवन्तम् ।

( ६५ ) विलासवापीतटवीचिवादनात्-
पिकाऽलिगीतेः शिखिलास्यलाघवात् ।
वनेऽपि तौर्यत्रिकमारराध तं
क्व भोगमाप्नोति न भाग्यभाग्जनः ॥१।१०२॥

प्रसङ्गः—नरपतिना नलेनोपवनेऽपि तौर्यत्रिकसुखमधिगतमित्याश्चर्यमिव मन्वानो महाकविः श्रीहर्षः प्रकारान्तरेण तस्यौचित्यं द्रढयत्यत्र ।

अन्वयः—विलासवापीतटवीचिवादनात् पिकाऽलिगीतेः शिखिलास्यलाघवात् वनेऽपि तं तौर्यत्रिकम् आरराध, भाग्यभाक् जनः क्व भोगं न आप्नोति ।

व्याख्या—विलासवापीतटवीचिवादनात्=विहारदीर्घिकातीरतरङ्गनादात्, पिकाऽलिगीतेः=कोकिलद्विरेफगानात्, शिखिलास्यलाघवात्=मयूरनृत्यनैपुण्यात्, वने अपि=उपवने अपि; तं=प्रथितं नलं, तौर्यत्रिकं=नृत्यगीतवाद्यत्रयम्, आरराध=समाराधयामास । तथा हि—भाग्यभाक् भाग्यवान्, जनः=लोकः, क्व=कुत्र, भोगं=सुखं, न=नहि, आप्नोति=प्राप्नोति । सर्वत्रैव सुखमधिगच्छतीत्याशयः । सामान्येन विशेषसमर्थनादर्थान्तरन्यासालङ्कारोऽत्र । वंशस्थं वृत्तम् ।

समासः—विलासस्य वापी, विलासवाप्याः तटम्, वीचीनां वादनम्, विलासवापीतटे वीचिवादनं, तस्मात् विलासवापीतटवीचिवादनात् । पिकाश्च अलयश्च पिकालयः, तेषां गीतिः, तस्याः पिकाऽलिगीतेः । शिखिनां लास्यम्, शिखिलास्यस्य लाघवं, तस्मात् शिखिलास्यलाघवात् । भाग्यं भजतीति भाग्यभाक् ।

(६६) इतिष्टगन्धाऽऽढ्यमटन्नसौ वनं
पिकोपगीतोऽपि शुकस्तुतोऽपि च ।

अविन्दताऽऽमोदभरं बहिः परं
विदर्भसुभ्रूविरहेण नाऽऽन्तरम् ॥ १।१०४ ॥

**प्रसङ्गः**—'भैमीविरहसन्तप्तो नरपतिः नलः शुकस्तुतिं शारिकापौरुषगायनश्चाकर्ण्यापि आन्तरमानन्दातिरेकं नालभत' इत्यस्य वर्णनं विदधाति महाकविरत्र ।

**अन्वयः**—इति इष्ट गन्धाढ्यं वनम् अटन् असौ पिकोपगीतः अपि शुकस्तुतः अपि च परं बहिः आमोदभरम् अविन्दत, विदर्भसुभ्रूविरहेण आन्तरं आमोदभरम् न अविन्दत ।

**व्याख्या**—इति=एवं प्रकारेण, इष्टगन्धाढ्यम्=अभीष्टसौरभान्वितं, वनम्=उद्यानम्, अटन्=भ्रमन्, असौ=नलः, पिकोपगीतः अपि=कोकिलैरुपगीतोऽपि, शुकस्तुतः अपि=कीरसंस्तुतिविषयीकृतोऽपि, परं=केवलं, बहिः=बाह्यम्, आमोदभरम्=सौरभ्याऽतिशयं, अविन्दत=अलभत, विदर्भसुभ्रूविरहेण भैमीवियोगेन, आन्तरं=मानसं, आमोदभरम्=आनन्दाऽतिरेकम्, न=नहि; अविन्दत=अलभत, अपितु दुःखमेवानुभूतवान्=इत्याशयः । अस्मिन् श्लोके उक्तनिमित्ताविशेषोक्तिरलङ्कारः, 'सति हेतौ फलाभावो विशेषोक्तिस्तथा द्विधा' इति लक्षणात् । वंशस्थं वृत्तम् ।

**समासः**—इष्टश्चासौ गन्धः, तेन आढ्यं, इष्टगन्धाढ्यम् । पिकैः उपगीतः पिकोपगीतः शुकैः स्तुतः शुकस्तुतः । आमोदस्य भरः, तम् आमोदभरम् । शोभने भ्रुवौ यस्याः सा सुभ्रूः, विदर्भाणां सुभ्रूः तस्या विरहः, तेन विदर्भसुभ्रूविरहेण । अन्तरे भवः आन्तरः, तम् आन्तरम् ।

(६७) अथ स्वमादाय भयेन मन्थना-
च्चिरत्नरत्नाऽधिकमुच्चितं चिरात् ।
निलीय तस्मिन्निवसन्नपांनिधि-
र्वने तडागो ददृशेऽवनीभुजा ॥ १।१०७ ॥

**प्रसङ्गः**—भैमीविरहजन्यदुःखमपनेतुमीहमानो नरपतिः नलः मन्थनभिया चिरात् सञ्चितं रत्नराशिमादायोपवने निलीय निवसन्तमपांनिधिमिव कञ्चित् सरोविशेषं संदृष्टवान्' इत्यस्य रमणीयं वर्णनं विदधाति महाकविरत्र ।

**अन्वयः**—अथ मन्थनात् भयेन चिरात् उच्चितं चिरत्नरत्नाऽधिकं स्वम् आदाय तस्मिन् वने निलीय निवसन् अपां निधिः ( इव ) तडागः अवनीभुजा ददृशे ।

**व्याख्या**—अथ=उद्यानाऽवलोकनानन्तरं, मन्थनात्=मथनात्, भयेन=भीत्या, चिरात्=बहुकालात्, उच्चितं=सञ्चितं, चिरत्नरत्नाऽधिकं=श्रेष्ठवस्तुप्रचुरं, स्वम्=धनम्, आदाय=नीत्वा, तस्मिन्=पूर्वकथिते, वने=उद्याने, निलीय=अन्तर्धाय, निवसन्=वासं कुर्वन्, अपांनिधिः=सागरः, ( इव=यथा ) तडागः=सरोविशेषः, अवनीभुजा=भूपतिना नलेन, ददृशे=दृष्टः ।

अस्मिन् श्लोके 'अपांनिधिः' इत्यत्राप्रस्तुतधनिकपुरुषव्यवहारसमारोपात् समासोक्तिरलङ्कारः, 'इव' शब्दाभावात् प्रतीयमानोत्प्रेक्षा च । एवमुभयोरलङ्कारयोः संसृष्टिः । वंशस्थं वृत्तम् ।

**समासः**—चिरात् भवानि चिरत्नानि, चिरत्नानि च तानि रत्नानि, चिरत्नैः अधिकः, तम् चिरत्नरत्नाऽऽधिकम् । अवनीं भुनक्तीति अवनीभुक्, तेन अवनीभुजा ।

(६८) पयोनिलीनाऽभ्रमुकामुकावलीरदाननन्तोरगपुच्छसच्छवीन् ।
जलार्द्धरुद्धस्य तटान्तभूमिदो मृणालजालस्य निभाद् बभार यः ॥
१।१०८॥

**प्रसङ्गः**—'सागरे त्वेक एवैरावतः, तडागे त्वनन्ता एवैरावताः' इति प्रकारान्तरेण निगदन् महाकविः श्रीहर्षः भूपतिना नलेन सन्दृष्टस्य पद्माकरस्य पयोधेराधिक्यं सन्दर्शयत्यत्र ।

**अन्वयः**—यः जलार्धरुद्धस्य तटाऽन्तभूभिदः मृणालजालस्य निभात् अनन्तोरगपुच्छसच्छवीन् पयोनिलीनाऽभ्रमुकावलीरदान् बभार ।

**व्याख्या**—यः=कासारः, जलार्धरुद्धस्य=उदकाऽर्धच्छन्नस्य, तटाऽन्तभूभिदः=तटप्रान्तनिर्गतस्य, मृणालजालस्य=बिसव्रातस्य, निभात्=मिषात्, अनन्तोरगपुच्छसच्छवीन्=शेषाऽहिलाङ्गूलसमवर्णान्, धवलवर्णानित्याशयः, पयोनिलीनाऽभ्रमुकामुकाऽऽवलीरदान्=वारिमग्नैरावतश्रेणीदन्तान्, बभार=दधार । अस्मिन् श्लोके उपमा-कैतवापह्नुतिरलङ्कारयोरङ्गाङ्गिभावसत्वात् सङ्करालङ्कारः । वंशस्थं वृत्तम् 'जतौ तु वंशस्थमुदीरितं जरौ' इति लक्षणात् ।

**समासः**—अर्धं ( यथातथा- ) रुद्धम्, जलेन अर्धरुद्धं, तस्य जलार्धरुद्धस्य । तटस्य अन्तः, तस्मिन् भूः, तां भिनत्तीति; तस्य तटाऽन्तभूभिदः । मृणालानां जालं, तस्य मृणालजालस्य । अनन्तश्चासौ उरगः, अनन्तोरगस्य पुच्छम्, समाना छविः येषां ते सच्छवयः, अनन्तोरगपुच्छेन सच्छवयः, तान् अनन्तोरगपुच्छ-

सच्छवीन्। पयसि निलीनाः, अभ्रमोः कामुकाः, तेषाम् आवल्यः, पयोनिलीनाऽभ्रमुकावलीरदान्।

(६९) तटाऽन्तविश्रान्ततुरङ्गमच्छटास्फुटाऽनुबिम्बोदयचुम्बनेन यः।
बभौ चलद्वीचिकशान्तशातनैः सहस्रमुच्चैः श्रवसामिव श्रयन्
॥ १।१०९ ॥

प्रसङ्गः—'नरपतिना नलेन सन्दृष्टस्तडागः उपवने उच्चैःश्रवसां बाहुल्यात् पयोधेरधिकामभिख्यां सन्धारयामास' इत्यस्य मनोरमं वर्णनं विदधाति महाकविरत्र।

अन्वयः—यः तटाऽन्तविश्रान्ततुरङ्गमच्छटास्फुटाऽनुबिम्बोदयचुम्बनेन वीचिकशाऽन्तशातनैः शलत् उच्चैः श्रवसां सहस्रं श्रयन् इव बभौ।

व्याख्या—यः=तडागः, तटाऽन्तविश्रान्ततुरङ्गमच्छटास्फुटाऽनुबिम्बोदयचुम्बनेन=तीरप्रान्तसंस्थितनैषधाऽश्वश्रेणीरभिव्यक्तप्रतिविम्बप्रादुर्भावसम्बन्धेन, वीचिकशाऽन्तशातनैः=तरङ्गाश्वताडनीरुग्रताडनैः, चलत्=स्फुरत्, उच्चैःश्रवसाम्=उच्चैःश्रवोनामकसुरपतिहयानाम्, सहस्रं=दशशती, बाहुल्यमित्याशयः। श्रयन्=प्राप्नुवन्, इव=यथा, बभौ=शुशुभे। अस्मिन् श्लोके रूपकोत्प्रेक्षालङ्कारौ स्तः। वंशस्थं वृत्तम्।

समासः—तटस्य अन्तः, तस्मिन् विश्रान्ताः, तुरङ्गमाणां छटा, तटान्तविश्रान्ताश्च ताः तुरङ्गमच्छटाः, अनुविम्बस्य उदयः, तस्य चुम्बनम्, स्फुटम् (यथा तथा) अनुबिम्बोदयचुम्बनम्, तटान्तविश्रान्ततुरङ्गमच्छटायाः स्फुटाऽनुबिम्बोदयचुम्बनेन। वीचय एव कशाः, वीचिकशानाम् अन्ताः, तैः शातनानि, तैः वीचिकशाऽन्तशातनैः।

(७०) सिताऽम्बुजानां निवहस्य यश्छलाद्-
बभावलिश्यामलितोदरश्रियाम्।
तमः समच्छायकलङ्कसङ्कुलं
कुलं सुधांशोर्बहुलं वहन्बहु ॥ १।११० ॥

प्रसङ्गः—'भूपतिना नलेनोपवने सन्दृष्टस्तडागो द्विरेफसंसेवितश्वेतारविन्दानां बाहुल्यात् नैकान् चन्द्रमसः धारयन्निव पयोधेरधिकां सुषमां सन्धारयामास' इति प्रोच्य महाकविः श्रीहर्षः पद्माकरस्य पारावारेण साकं तुलनामत्र चारुतया विदधाति।

**अन्वयः**—यः अलिश्यामलितोदरश्रियां सिताऽम्बुजानां निवहस्य छलात् तमः समच्छायकलङ्कसङ्कुलं वहुलं सुधांऽशोः कुलं वहन् बहु बभौ ।

**व्याख्या**—यः=कासारः, ( 'पद्माकरस्तडागोऽस्त्री कासारः सरसी सरः' इत्यमरः ) अलिश्यामलितोदरश्रियां=षट्पदश्यामीकृतमध्यसुषमाणां, सिताऽम्बुजानां=श्वेतारविन्दानां, निवहस्य=समूहस्य, छलात्=व्याजात्, तमःसमच्छायकलङ्कसङ्कुलं=तिमिरवर्णलाञ्छनव्याप्तं, बहुलं=प्रचुरं, सुधांशोः=हिमांशोः, कुलं=समूहं, वहन्=धारयन्, बहु=अधिकं, बभौ=शुशुभे। अस्मिन् श्लोके उपमा कैतवापह्नुतिरित्युभयोरलङ्कारयोरङ्गाङ्गिभावसत्वात् सङ्करालङ्कारः। वंशस्थं वृत्तम् 'जतौ तु वंशस्थमुदीरितं जरौ' इति लक्षणात्।

**समासः**—श्यामला कृता श्यामलिता, अलिभिः श्यामलिता, उदरस्य श्रीः, अलिश्यामलिता उदरश्रीः येषां तानि अलिश्यामलितोदरश्रीणि, तेषाम् अलिश्यामलितोदरश्रियाम् । सितानि च तानि अम्बुजानि, तेषां सिताऽम्बुजानाम्। तमसा समा, सा छाया=कान्तिः, येषां ते तमःसमच्छाया, ते च ते कलङ्काः, तैः सङ्कुलं, तत् तमसमच्छायकलङ्कसङ्कुलम् । सुधा (युक्ता) अंशवः यस्य सः सुधांऽशुः, तस्य सुधांऽशोः ।

( ७१ ) रथाऽङ्गभाजा कमलाऽनुषङ्गिणा
शिलीमुखस्तोमसखेन शार्ङ्गिणा ।
सरोजिनी स्तम्बकदम्बकैतवा-
न्मृणालशेषाऽहिभुवाऽन्वयायि यः ।।१।११।।

**प्रसङ्गः**—अनङ्गेषुणा भृशं संविद्धेन नरपतिना नलेनोपवने सन्दृष्टस्य तडागस्य सुदर्शनचक्रधारिणा विष्णुना सनाथितेन सागरेण साकं साम्यं सन्दर्शयति महाकविरत्र ।

**अन्वयः**—रथाऽङ्गभाजा कमलाऽनुषङ्गिणा शिलीमुखस्तोमसखेन मृणालशेषाऽहिभुवा शार्ङ्गिणा सरोजिनी स्तम्बकदस्वकैतवात् यः ( अपांनिधिः ) ( यथा ) अन्वयायि ( तथैव ) रथाङ्गभाजा कमलाऽनुषङ्गिणा शिलीमुखस्तोमसखेन मृणालशेषाऽहिभुवा सरोजिनीस्तम्बकदम्बकैतवात् यः अन्वयायि ।

**व्याख्या**—रथाङ्गभाजा=सुदर्शनाख्यचक्रविभ्रता, कमलाऽनुषङ्गिणा=लक्ष्मीसंसर्गवता, शिलीमुखस्तोमसखेन=द्विरेफव्राततुल्येन, मृणालशेषाऽहिभुवा=बिसतुल्यशेषनागशयनाधारेण, सरोजिनीस्तम्बकदम्बकैतवात्=कमलिनी

गुल्मसमूहमिषात्, शार्ङ्गिणा=विष्णुना, यः अपांनिधिः=सागरः, ( यथा=येन प्रकारेण ) अन्वयायि=अनुगतः, ( तथैव=तेनैव प्रकारेण ) रथाङ्गभाजा=चक्रवाकान्वितेन, कमलाऽनुषङ्गिणा=अरविन्दसंसर्गयुतेन, शिलीमुखस्तोमसखेन=भ्रमरवृन्दसहचरेण, सरोजिनीस्तम्बकदम्बकैतवात्=कमलिनीगुच्छसमूहव्याजात्, मृणालशेषाऽहिभुवा=शेषतुल्याबिसाधारेण, यः अपांनिधिः=तडागः, अन्वयायि=अनुगतः। अस्मिन् श्लोके 'उपमा-कैतवापह्नुति-श्लेष' इत्येतेषामलङ्काराणां निरपेक्षतया स्थितिः सत्वात् संसृष्टिरलङ्कारः। वंशस्थं वृत्तम्।

समासः—रथस्य अङ्गम्, रथाङ्गं (चक्रं चक्रवाकं वा) भजतीति रथाङ्गभाक्, तेन रथाऽङ्गभाजा। अनुषङ्गः अस्य अस्तीति अनुषङ्गी, कमलया अनुषङ्गी, तेन कमलाऽनुषङ्गिणा, अथवा कमलैः अनुषङ्गी, तेन कमलाऽनुषङ्गिणा। शिलीमुखानां स्तोमः, तस्य सखा, ( सदृशः ) तेन शिलीमुखस्तोमसखेन। शेषश्चासौ अहिः, मृणालम् इव शेषाऽहिः, मृणालशेषाऽहिः भूः=शयनाधारः, यस्य सः, तेन मृणालशेषाऽहिभुवा। पक्षान्तरे—मृणालं शेषाऽहिः इव, मृणालशेषाहेः भूः=आधारः, तेन मृणालशेषाऽहिभुवा। सरोजिनीनां स्तम्बाः, सरोजिनीस्तम्बानां कदम्बं, तस्य कैतवं, तस्मात् सरोजिनीस्तम्बकदम्बकैतवात्।

( ७२ ) महीयसः पङ्कजमण्डलस्य य-<br>
च्छलेन गौरस्य च मेचकस्य च।<br>
नलेन मेने सलिले निलीनयो-<br>
स्त्विषं विमुञ्चन्विधुकालकूटयोः ॥१।११२॥

प्रसङ्गः—उपवने भूपतिना नलेन सन्दृष्टे सरसि श्वेतनीलारविन्दानां वाहुल्यात् सुधांशुकालकूटयोस्त्विषमुद्गिरन् सागरमिव मन्वानो महाकविरत्र तडागस्योदधिना साकं साम्यं वर्णयति।

अन्वयः—यः महीयसः गौरस्य मेचकस्य च पङ्कजमण्डलस्य छलेन सलिले निलीनयोः विधुकालकूटयोः त्विषं विमुञ्चन् ( इव ) नलेन मेने।

व्याख्या—यः=सरोविशेषः, महीयसः=महत्तरस्य, गौरस्य=शुभ्रस्य, मेचकस्य=नीलस्य च, पङ्कजमण्डलस्य=अरविन्दनिवहस्य, श्वेतनीलकमलयोरित्याशयः, छलेन=व्याजेन, सलिले=वारिणि, निलीनयोः=निमग्नयोः, विधुकालकूटयोः=हिमांशुकालकूटाख्यविषयोः सितासितयोः, त्विषं=कान्ति,

विमुञ्चन्=त्यजन्, इव=यथा, नलेन=एतन्नामकेन राज्ञा, मेने=सम्भावितः। कैतवापह्नुतिरुत्प्रेक्षालङ्कारयोरङ्गाङ्गिभावत्वात् सङ्करालङ्कारः। वंशस्थं वृत्तम्।

**समासः**—अतिशयेन महत् महीयः, तस्य महीयसः। पङ्कजानां मण्डलं, तस्य पंकजमण्डलस्य। विधुश्च कालकूटं च, तयोः विधुकालकूटयोः।

(७३) चलीकृता यत्र तरङ्गरिङ्गणैरबालशैवाललतापरम्पराः।
ध्रुवं दधुर्वाडवहव्यवाडवस्थितिप्ररोहत्तमभूमधूमताम्॥
१।११४॥

**प्रसङ्गः**—महाकविः श्रीहर्षोऽत्रोपवने नरपतिना नलेन सन्दृष्टस्य तडागस्य पयोधिधर्मत्वं सविशेषं वर्णयति।

**अन्वयः**—यत्र तरङ्गरिङ्गणैः चलीकृता अबालशैवाललतापरम्पराः वाडवहव्यवाडवस्थितिप्ररोहत्तमधूमतां दधुः ध्रुवम्।

**व्याख्या**—यत्र=यस्मिन् कासारे, तरङ्गरिङ्गणैः=वीचिकम्पनैः, चलीकृताः=चपलीकृतः, अबालशैवाललतापरम्पराः=कठोरशेवलव्रततीपङ्क्तयः, वाडवहव्यवाडवस्थितिप्ररोहत्तमभूमधूमतां=वाडवाग्निरन्तरवस्थानबहिप्रादुर्भवत्तमबाहुल्यधूमतां, दधुः=सन्धारयामासुः, ध्रुवम्=इव। उत्प्रेक्षालङ्कारोऽत्र, वंशस्थं वृत्तम्।

**समासः**—तरङ्गाणां रिङ्गणानि, तैः तरङ्गरिङ्गणैः। अचलाः चलाः सम्पद्यन्ते तथा कृताः, चलीकृताः। न बालाः अबालाः, शैवालानां लताः, अबालाश्च ताः शैवाललताः, तासां परम्परा, अबालशैवाललतापरम्पराः। हव्यं वहतीति हव्यवाड्, वाडवश्चासौ हव्यवाट्, तस्य अवस्थितिः, अतिशयेन प्ररोहन् प्ररोहत्तमः, बहोर्भावः भूमा, प्ररोहत्तमो भूमा येषां ते प्ररोहत्तमभूमानः, ते च ते धूमाः वाडवहव्यवाडवस्थित्या प्ररोहत्तमभूमधूमः, तेषां भावस्तत्ता, ताम् वाडवहव्यवाडवस्थितिप्ररोहत्तमभूमधूमताम्।

(७४) प्रकाममादित्यमवाप्यकण्टकैः
करम्बिताऽऽमोदभरं विवृण्वती।
धृतस्फुटश्रीगृहविग्रहा दिवा
सरोजिनी यत्प्रभवाऽप्सरायिता॥१।११५॥

**प्रसङ्गः**—द्रष्टव्यम्, श्लो० ७३।

**अन्वयः**—आदित्यम् अवाप्य कण्टकैः प्रकामं करम्बिता, आमोदभरं विवृण्वती, दिवा धृतस्फुटश्रीगृहविग्रहा यत्प्रभवा सरोजिनी अप्सरायिता ।

**व्याख्या**—आदित्यम्=भास्करम्, अप्सरःपक्षे—सुरपतिं शक्रं, अवाप्य=अधिगत्य, कण्टकैः=नालगतैः तीक्ष्णाग्रैरवयवैः, अप्सरःपक्षे—पुलकैः, प्रकामम्=भृशम्, करम्बिता=दन्तुरिता, अप्सरः पक्षे—समन्विता, आमोदभरं=पारिमलसम्पदं, अप्सरःपक्षे—आनन्दसम्पदं, विवृण्वती=प्रकटयन्ती, दिवा=दिवसे, धृतस्फुटश्रीगृहविग्रहा=गृहीतसुस्पष्टारविन्दस्वरूपा, अप्सरःपक्षे—दिवा=स्वर्गेण, धृतस्फुटश्रीगृहविग्रहा=गृहीतशोभास्थानतनुः, स्वर्गलोकवासिनीरित्याशयः, यत्प्रभवा=यत् पद्माकरसमुद्भूता, सरोजिनी=कमलिनी, अप्सरायिता=अप्सर इवाचरिता । अस्मिन् श्लोके श्लेषोपमालङ्कारद्वयं राजते । वंशस्थं वृत्तम् 'जतौ तु वंशस्थमुदीरितं जरौ' इति लक्षणात् ।

**समासः**—अदितेरपत्यं पुमान् आदित्यः, तम् आदित्यम् । आमोदस्य भरः, तम् आमोदभरम् । श्रियः गृहाणि, स्फुटानि च तानि श्रीगृहाणि, धृतानि स्फुटश्रीगृहाणि ( पद्मानि ) यस्य सः, धृतस्फुटश्रीगृहः विग्रहः ( स्वरूपं ) यस्याः सा धृतस्फुटश्रीगृहविग्रहा । अथवा श्रियः=शोभायाः, गृहम्, धृतं स्फुटं श्रीगृहं विग्रहः ( शरीरम् ) यस्याः सा धृतस्फुटश्रीगृहविग्रहा ।

( ७५ ) अवश्यभव्येष्वनवग्रहग्रहा
यया दिशा धावति वेधसः स्पृहा ।
तृणेन वात्येव तयाऽनुगम्यते
जनस्य चित्तेन भृशाऽवशात्मना ॥१।१२०॥

**प्रसङ्गः**—भूपतेः नलस्य भैम्या साकं भाविनं संयोगं मनसि कृत्य महाकविः श्लोकस्यास्य माध्यमेन प्रकारान्तेणावश्यम्भावित्वस्य समर्थनं विदधात्यत्र ।

**अन्वयः**—अवश्यभव्येषु अनवग्रहग्रहा वेधसः स्पृहा यया दिशा धावति तया भृशाऽवशात्मना जनस्य चित्तेन तृणेन वात्या इव अनुगम्यते ।

**व्याख्या**—अवश्यभव्येषु=अवश्यं भाव्यर्थेषु विषये, अनवग्रहग्रहा=अप्रतिबन्धनिर्बन्धा, वेधसः=विधातुः, स्पृहा=वाञ्छा, यया दिशा=येन पथा, धावति=व्रजति, तया=तेनाध्वना, भृशाऽवशात्मना=अत्यन्तपरतन्त्रस्वभावेन, जनस्य=लोकस्य, चित्तेन=चेतसा, तृणेन=अर्जुनेन, वात्या=वात-

समुदायः, इव=यथा, अनुगम्यते=अनुस्रियते, वेधसः स्पृहा कर्म। उपमा-लङ्कारोऽत्र, वंशस्थं वृत्तम् 'जतौ तु वंशस्थमुदीरितं जरौ' इति लक्षणात्।

समासः—भवन्तीति भव्याः, अवश्य भव्याः, तेषु अवश्यभव्येषु। अविद्य-मानः अवग्रहः यस्मिन् सः, ग्रहः यस्यां सा अनवग्रहग्रहा। अवशः=अधीनः, आत्मा=स्वभावः, यस्य स भृशम् (यथा तथा) अवशात्मा, तेन भृशाऽवशा-त्मना। वातानां समूहः वात्या।

(७६) अथाऽवलम्ब्य क्षणमेकपादिकां
तदा निदद्रावुपपल्वलं खगः।
स तिर्यगावर्जितकन्धरः शिरः
पिधाय पक्षेण रतिक्लमाऽलसः ॥१।१२१॥

प्रसङ्गः—भैमीविरहजन्यमानसक्लमं दूरयितुकामेन नरपतिना नलेन तडागान्तिके सन्दृष्टस्य हिरण्मयहंसस्य स्थितिमत्र चारुतया वर्णयति महाकविरत्र। -

अन्वयः—अथ रतिक्लमाऽलसः स खगः तदा एकपादिकाम् अवलम्ब्य तिर्यगावर्जितकन्धरः (सन्) पक्षेण शिरः पिधाय उपपल्वलं क्षणं निदद्रौ।

व्याख्या—अथ=नलदृष्टिप्राप्त्यनन्तरं, रतिक्लमाऽलसः=सुरतखेदाल-स्यान्वितः (सन्), सः=पूर्वनिगदितः, खगः=हंसः, तदा=तस्मिन् काले, एकपादिकाम्=एकपादाऽवस्थानक्रियाम्, अवलम्ब्य=आश्रित्य, तिर्यगावर्जित-कन्धरः=तिर्यगावर्तितग्रीवः (सन्), पक्षेण=पतत्त्रेण, शिरः=मूर्धानं, पिधाय=आच्छाद्य, उपपल्वलं=क्रीडासरोवरान्तिके, क्षणं=कञ्चित्कालं, निदद्रौ=सुष्वाप। स्वभावोक्तिरलङ्कारोऽत्र, 'स्वभावोक्तिर्दुरूहार्थस्वक्रियारूप-वर्णनम्' इति लक्षणात्। वंशस्थं वृत्तम् 'जतौ तु वंशस्थमुदीरितं जरौ' इति लक्षणात्।

समासः—रतेः क्लमः, तेन अलसः रतिक्लमाऽलसः। एकः पादः यस्यां (क्रियायां) एकपादिका, ताम् एकपादिकाम्। तिर्यक् आवर्जिता कन्धरा येन सः तिर्यगावर्जितकन्धरः। पल्वलस्य समीपे उपपल्वलम्।

(७७) कृताऽवरोहस्य हयादुपानहौ
ततः पदे रेजतुरस्य बिभ्रती।
तयोः प्रवालैर्वनयोस्तथाऽम्बुजै-
र्नियोद्धुकामे किमु बद्धवर्मणी ? ॥१।१२३॥

प्रसङ्गः—महाकविः श्रीहर्षः हिरण्मयहंसस्य शोभां समुपवर्ण्य नरपतेः नलस्य चरणद्वयसुषमामत्र चारुतया वर्णयति ।

अन्वयः—ततः हयात्, कृताऽवरोहस्य अस्य उपानहौ बिभ्रती पदे तयोः वनयोः प्रवालैः तथा अम्बुजैः नियोद्धुकामे ( अतः ) बद्धवर्मणी । रेजतुः किमु ? ।

व्याख्या—ततः=हंसनिदर्शनानन्तरं, हयात्=घोटकात्, कृताऽवरोहस्य =विहिताऽवतरणस्य, अस्य=नलस्य, उपानहौ=वर्मणी पादत्राणे, बिभ्रती =धारयती, पदे=चरणे, तयोः=पूर्वोक्तयोः, वनयोः=सलिलकाननयोः, प्रवालैः=पल्लवैः, तथा=तेन प्रकारेण, अम्बुजैः=कमलैः, नियोद्धुकामे= युद्धकामे, अतः बद्धवर्मणी=सन्नद्धकवचे, रेजतुः=शुशुभाते, किमु ? । अत्र श्लेषयथासंख्योत्प्रेक्षालङ्काराणामङ्गाङ्गिभावसत्वात् सङ्करालङ्कारः । वंशस्थं वृत्तम् ।

समासः—कृतः अवरोहः येन तस्य कृताऽवरोहस्य । उपनह्येते इति उपानहौ, ते उपानहौ । वनं च वनं च वने, तयोः वनयोः । नियोद्धुं कामः ययोस्ते नियोद्धुकामे ।

( ७८ ) विधाय मूर्तिं कपटेन वामनीं
स्वयं बलिध्वंसिविडम्बिनीमयम् ।
उपेतपार्श्वश्चरणेन मौनिना
नृपः पतङ्गं समधत्त पाणिना ॥१।१२४॥

प्रसङ्गः—'नरपतिः नलस्तडागान्तिके हिरण्मयं हंसं निर्वर्ण्य वामनीं मूर्तिं विधाय तं स्वकरेणागृह्णात्' इत्यस्य मनोरमं वर्णनं विदधाति महाकविरत्र ।

अन्वयः—अयं नृपः स्वयं कपटेन वामनीं बलिध्वंसिविडम्बिनीं मूर्तिं विधाय मौनिना चरणेन उपेतपार्श्वः पाणिना पतङ्गं समधत्त ।

व्याख्या—अयं=एषः, नृपः=नरपतिः नलः, स्वयं=आत्मना, कपटेन =व्याजेन, वामनीं=ह्रस्वां, बलिध्वंसिविडम्बिनीं=कपटवामनविष्णुमूर्त्यनुकारिणीं, मूर्तिं=तनुं, विधाय=कृत्वा, शरीरं सङ्कुच्येत्याशयः, मौनिना= निःशब्देन, चरणेन=पादेन, उपेतपार्श्वः=अधिगतहंसान्तिकः, पाणिना= हस्तेन, पतङ्गं=खगं हंसम्, समधत्त=सन्धृतवान् । स्वभावोक्तिरलङ्कारोऽत्र 'स्वभावोक्तिर्दुरूहाऽर्थस्वक्रियारूपवर्णनम्' इति लक्षणात् । वंशस्थं वृत्तम् 'जतौ तु वंशस्थमुदीरितं जरौ' इति लक्षणात् ।

**समासः**—वामनस्य इयं वामनी, तां वामनीम् । बलिं ध्वंसयतीति बलिध्वंसी ( वामनः ), बलिध्वंसिनं विडम्बयतीति बलिध्वंसिविडम्बिनी, तां बलिध्वंसिविडम्बिनीम् । मुनेर्भावः मौनम्, मौनम् अस्याऽस्तीति मौनी, तेन मौनिना । उपेतं पार्श्वं येन सः, तम् उपेतपार्श्वम् ।

( ७९ ) तदात्तमात्मानमवेत्य सम्भ्रमात्
पुनः पुनः प्रायसदुत्प्लवाय सः ।
गतो विरुत्योड्डयने निराशतां
करौ निरोद्धुर्दशति स्म केवलम् ॥१।१२५॥

**प्रसङ्गः**—'हिरण्मयो हंसः आत्मानं नलाधीनं विज्ञायोत्पतनाय प्रयासं विधानानन्तरं नैराश्यमधिगतः सन् भूपतेः नलस्य करौ दशति स्म, इति प्रोच्य महाकविः श्रीहर्षोऽत्र हंसस्य स्वाभाविकीं क्रियां वर्णयति ।

**अन्वयः**—स आत्मानं तदात्तम् अवेत्य सम्भ्रमात् उत्प्लवाय पुनः पुनः प्रायसत्, उड्डयने निराशतां गतः ( सन् ) विरुत्य निरोद्धुः करौ केवलं दशति स्म ।

**व्याख्या**—सः=गृहीतो हंसः, आत्मानं=निजं, तदात्तम्=नलाऽधीनं, अवेत्य=विज्ञाय, सम्भ्रमात्=त्वरायाः, उत्प्लवाय=उत्पतनाय, पुनः पुनः=अभीक्ष्णं, प्रायसत्=प्रयत्नं कृतवान्, उड्डयने=उत्प्लवने, निराशतां=नैराश्यं, गतः=प्राप्तः, सन्, विरुत्य=विक्रुश्य, निरोद्धुः=ग्रहीतुः, नलस्येत्याशयः, करौ=हस्तौ, केवलम्=एव, दशति स्म=दष्टवान् । स्वभावोक्तिरलङ्कारोऽत्र, वंशस्थं वृत्तम् ।

**समासः**—तेन आत्तः, तं तदात्तं । निर्गता आशा यस्मात् सः, निराशस्य भावो निराशता, तां निराशताम् । निरुणद्धीति निरोद्धा, तस्य निरोद्धुः ।

( ८० ) ससम्भ्रमोत्पातिपतत्कुलाऽऽकुलं
सरः प्रपद्योत्कतयाऽनुकम्पिताम् ।
तमूर्मिलोलैः पतगग्रहान्नृपं
न्यवारयद्वारिरुहैः करैरिव ॥१।१२६॥

**प्रसङ्गः**—हिरण्मयहंसग्रहणानन्तरं सत्वरोत्पतनशीलपतगव्रातव्याकुलं सरः स्वतरङ्गचपलैः कमलैः करैरिव राजानं नलं निवारयन्निवासीदि'त्यस्य मनोरमं वर्णनं विदधाति महाकविः श्री हर्षोऽत्र ।

अन्वयः—ससम्भ्रमोत्पातिपतत्कुलाकुलं सरः उत्कतया अनुकम्पितां प्रपद्य तं नृपम् ऊर्मिलोलैः वारिरुहैः करैः इव पतगग्रहात् न्यवारयत् ।

व्याख्या—ससम्भ्रमोत्पातिपतत्कुलाऽऽकुलं=सत्वरोत्पतनशीलविहगसमुदायसङ्कुलं, सरः=कासारः, उत्कतया=उन्मनस्तया, अनुकम्पिताम्=कृपालुतां, प्रपद्य=समधिगत्य, तं=पूर्वनिगदितं' नृपं=नरपतिं नलम्, उर्मिलोलैः=वीचिचपलैः, वारिरुहैः=जलजैः, करैः=हस्तैः, इव=यथा, पतगग्रहात्=हिरण्मयहंसविहगग्रहणात्, न्यवारयत् इव=निवारितवान् इव । रूपकोत्प्रेक्षयोरङ्गाङ्गिभावेन सङ्करालङ्कारोऽत्र । वंशस्थं वृत्तम् 'जतौ तु वंशस्थमुदीरितं जरौ' इति लक्षणात् ।

समासः—पतन्तीति पतन्तः, पततां कुलम्, सम्भ्रमेण सहितं, उत्पततीति उत्पाति, सम्भ्रमं यथा तथा उत्पाति, ससम्भ्रमोत्पाति च तत् पतत्कुलम्, तेन आकुलम्, ससम्भ्रमोत्पातिपतत्कुलाऽऽकुलम् । उत्कस्य भावः उत्कता, तया उत्कतया, अथवा उद्गतं कं=जलम्, यस्मात् उत्कं, तस्य भावः तत्ता, तया उत्कतया अनुकम्पते तच्छीलः अनुकम्पी, अनुकम्पिनः भावः अनुकम्पिता, ताम् अनुकम्पिताम् । उर्मिभिः लोलानि, तैः उर्मिलोलैः वारिणि रोहन्तीति वारिरुहाणि, तैः वारिरुहैः । पतगस्य ग्रहः, तस्मात् पतगग्रहात ।

(८१) पततत्रिणा तद्रुचिरेण वञ्चितं
श्रियः प्रयान्त्याः प्रविहाय पल्वलम् ।
चलत्पदाम्भोरुहनूपुरोपमा
चुकूज कूले कलहंसमण्डली ॥१।१२७॥

प्रसङ्गः—'हिरण्मयहंसे संगृहीते सति भूपतिना नलेनेतरे पक्षिगणाः भृशं चुक्रुशुः' इत्यस्य मनोरमं वर्णनं विदधाति महाकविरत्र ।

अन्वयः—रुचिरेण पतत्त्रिणा वञ्चितं तत् पल्वलं प्रविहाय प्रयान्त्याः श्रियः चलत्पदाम्भोरुहनूपुरोपमा कलहंसमण्डली कूले चुकूज ।

व्याख्या—रुचिरेण=सुन्दरेण, पतत्त्रिणा, वञ्चितं=विरहितं, तत्=पूर्वोक्तं, पल्वलं=सरः, प्रविहाय=सन्त्यज्य, प्रयान्त्याः=व्रजन्त्याः, श्रियः=लक्ष्म्याः, चलत्पदाम्भोरुहनूपुरोपमा=गच्छच्चरणकमलपादाङ्गदसाम्यान्विता, कलहंसमण्डली=राजहंसकदम्बकम्, कूले=सरस्तीरे, चुकूज=अव्यक्तशब्दं विहितवान् । 'अतिशयोक्ति-उपमा' इत्येतयोरङ्गाङ्गिभावसत्वात् सङ्करालङ्कारोऽत्र । वंशस्थं वृत्तम् ।

**समासः**—प्रयातीति प्रयान्ती, तस्याः प्रयान्त्याः। अम्भसि रोहत इति अम्भोरुहे, पदे अम्भोरुहे इव, चलती च ते पदाम्भोरुहे, तयो नूपुरौ, चलत्पदाम्भोरुहनूपुराभ्याम् उपमा ( सादृश्यम् ) यस्याः सा चलत्पदाम्भोरुहनूपुरोपमा। कलवाचो हंसाः कलहंसाः, कलहंसानां मण्डली कलहंसमण्डली।

( ८२ ) न त्रासयोग्या　वसुधेयमीदृश
　　स्त्वमङ्ग ! यस्याः पतिरुज्झितस्थितिः।
इति प्रहाय क्षितिमाश्रिता नभः
　　खगास्तमाचुक्रुशुरारवैः　खलु ॥१।१२८॥

**प्रसङ्गः**—मध्येवनं तडागस्यान्तिके राज्ञा नलेनोत्कतया हिरण्मयहंसे संधृते सति 'क्षितिरियं निवासार्हा न, यस्याः भवद्विधस्त्यक्तमर्यादः पतिरस्ति' इत्येवंरूपेण विनिन्दन्त इव पतगंनिवहाः खमाश्रित्य तं नराधिपतिम् आरवैः आचुक्रुशुः किल—इत्यस्य रमणीयं चित्रणं प्रस्तौति महाकविरत्र।

**अन्वयः**—इयं वसुधा वासयोग्या न। अंग ! यस्या उज्झितस्थितिः ईदृशः त्वं पतिः इति खगाः क्षितिं प्रहाय नभः आश्रिताः ( सन्तः ) तम् आरवैः आचुक्रुशुः खलु।

**व्याख्या**—इयं=एषा, वसुधा=महीः, वासयोग्या=निवासार्हा, न=नहि, अंग !=भो नरपते ! यस्याः=क्षितेः, उज्झितस्थितिः=सन्त्यक्तमर्यादः, ईदृशः=एतादृशः, त्वं=भवान्, पतिः=पालकः, अस्तीति शेषः, इति=एवं प्रकारेणोक्त्वा, खगाः=विगहाः, क्षितिं=पृथ्वीं, प्रहाय=परित्यज्य, नभः=गगनम्, आश्रिताः=प्राप्ताः सन्तः, तं=नलं, आरवैः=उच्चस्वरैः, आचुक्रुशुः=निनिन्दुः ( इव ), खलु=निश्चयेन। प्रतीयमानोत्प्रेक्षालङ्कारोऽत्र, वंशस्थं वृत्तम्।

**समासः**—वासे योग्या वासयोग्या। उज्झिता स्थितिर्येन सः उज्झितस्थितिः।

( ८३ ) 'न　जातरूपच्छदजातरूपता
　　द्विजस्य दृष्टे'यमिति स्तुवन्मुहुः।
अवादि तेनाऽथ स मानसौकसा
　　जनाधिनाथः　करपञ्जरस्पृशा ॥१।१२९॥

**प्रसङ्गः**—'कस्यापि पक्षिणः काञ्चनपक्षप्रादुर्भूतमीदृक्सौन्दर्यत्वं मया नाऽव-

लोकितम्' इत्येवंप्रकारेण स्तुवन्तं राजानं प्रति मानससरोवरवासि संगृहीतो हंसः इतोऽग्रे वक्तुं प्रक्रमते—इत्यस्य वर्णनं करोति महाकविः श्री हर्षोऽत्र ।

अन्वयः—'इयं जातरूपच्छदजातरूपता द्विजस्य न दृष्टा' इति मुहुः स्तुवन् स जनाऽधिनाथः अथ करपञ्जरस्पृशा तेन मानसौकसा अवादि ।

व्याख्या—इयम्=ईदृक्, जातरूपच्छदजातरूपता=हाटकपक्षप्रादुर्भूत सौन्दर्यम्, द्विजस्य=विहगस्य, न=नहि, दृष्टा=अवलोकिता, इति=एवं प्रकारेण, मुहुः=असकृत्, स्तुवन्=प्रशंसन्, स=पूर्वकथितः, जनाऽधिनाथः= नराधिपतिः, नल इत्याशयः, अथ=अनन्तरं, करपञ्जरस्पृशा=हस्तपिञ्जर-स्पर्शकारिणा, तेन=पूर्वोक्तेन, मानसौकसा=मानससरोवरवासिना, हंसेन, अवदि=उक्तः । 'करपञ्जरस्पृशा' इत्यत्रोपमालङ्कारः, 'जातरूप, जातरूप' इत्यत्र यमकालङ्कारः, 'सत्यर्थे पृथगर्थायाः स्वरव्यञ्जनसंहतेः । क्रमेण तेनैवा-वृत्तिर्यमकं विनिगद्यते ।।' इति लक्षणात् । वंशस्थं वृत्तम् ।

समासः—जातं रूपं ( सौन्दर्यम् ) यस्य सः जातरूपः, तस्य भावो जात-रूपता, जातरूपस्य छदाः, जातरूपच्छदैः जातरूपता जातरूपच्छदजातरूपता । जनानाम् अधिनाथः जनाऽधिनाथः । करः पञ्जरम् इव, करपञ्जरं स्पृशतीति करपञ्जरस्पृक्, तेन करपञ्जरस्पृशा । मानसम् ओकः ( स्थानम् ) यस्य स मानसौका, तेन मानसौकसा ।

(८४) धिगस्तु तृष्णातरलं भवन्मनः समीक्ष्य पक्षान्मम हेमजन्मनः ।
तवार्णवस्येव तुषारशीकरैर्भवेदमीभिः कमलोदयः कियान् ।।
१।१३० ।।

प्रसङ्गः—'हाटकनिभान् पक्षान् प्रेक्ष्य तवलालसाचपलं मानसं धिक् ? तुषारशीकरैरम्भोधेरिव मम हेमजन्मभिः पक्षैस्तव लक्ष्म्याः कियान् लाभः ?' इति प्रोच्य हिरण्मयहंसोऽत्र भूपतिं नलं प्रति मनोहरया शैल्या धिक्करोति ।

अन्वयः—हेमजन्मनः मम पक्षान् समीक्ष्य तृष्णातरलं भवन्मनः धिक् अस्तु, तुषारशीकरैः अर्णवस्य इव तव अमीभिः कियान् कमलोदयः भवेत् ?

व्याख्या—हेमजन्मनः=हैमान्, मम=हंसस्य, पक्षान्=पतत्राणि, समीक्ष्य=विलोक्य, तृष्णातरलं=लालसाचपलं, भवन्मनः=तव मानसं, धिक् =निन्दा, अस्तु=भवेत् । तुषाररशीकरैः=हिमकणैः, अर्णवस्य=सागरस्य, इव=यथा, तव=भवतः, अमीभिः=एभिः हेमजन्मभिः, पक्षैः, कियान्= किंपरिमाणः, कमलोदयः=लक्ष्म्याः वृद्धिः, जलवृद्धिर्वा, भवेत्=स्यात्, अति-

स्वल्पः स्यादित्याशयः । अगाधजलः सागरो यथोदकवृद्धयर्थं तुषारशीकरं नाद्रियते, तथैवाढचतमेन भवताऽपि मत्पक्षकाञ्चनमुपेक्ष्यमित्याशयः । 'उपमा-श्लेष'-इत्येतयोरलङ्कारयोः संसृष्टिरत्र । वंशस्थं वृत्तम् ।

समासः—हेम्नः जन्म येषां ते हेम जन्मानः, तान हेमजन्मनः । तृष्णया तरलं तृष्णातरलम् । भवतः मनः भवन्मनः तुषाराणां शीकराः, तैः तुषारशीकरैः । किं परिमाणमस्य कियान् । कमलायाः=लक्ष्म्याः, उदयः=वृद्धिः कमलोदयः ।

(८५) न केवलं प्राणिवधो वधो मम
त्वदीक्षणाद्विश्वसिताऽन्तरात्मनः ।
विगर्हितं धर्मधनैर्निबर्हणं
विशिष्य विश्वासजुषां द्विषामपि ॥ १।१३१ ॥

प्रसङ्गः—'कस्याऽपि जीवस्य वधः गर्हितः, तत्राऽपि निरपराधस्य, तत्रापि, भवान् धर्मिको नृपः' इति मनसि विभाव्य विश्वस्तस्य मम वधो धार्मिकैरत्यन्तविगर्हितो भवेदि'ति प्रोच्य हिरण्मयहंसोऽत्र राजानं नलमुपालभते ।

अन्वयः—( हे नृप ! ) त्वदीक्षणात् विश्वसिताऽन्तरात्मनः मम वधः केवलं प्राणिवधः न, विश्वासजुषां द्विषाम् अपि निबर्हणं धर्मधनैः विशिष्य विगर्हितम् ।

व्याख्या—( हे नृप !=भो राजन् ! ) त्वदीक्षणात्=भवन्मूर्तिसन्दर्शनात्, विश्वसिताऽन्तरात्मनः=विस्रब्धचित्तस्य, विश्वस्तस्येत्याशयः, मम=हंसस्य, वधः=मारणं, केवलं प्राणिवधः=जन्तुहननमात्रं, न=नहि, अस्तीति शेषः । ( किन्तु ) विश्वासजुषां=विस्रम्भभाजां, द्विषाम् अपि=रिपूणाम् अपि, निबर्हणं=हननं, धर्मधनैः=धर्मवित्तान्वितैः, मन्वादिभिरिति भावः, विशिष्य=अतिरिच्य, विगर्हितम्=अत्यन्तनिन्दितम् । अस्मिन् श्लोकेऽर्थान्तरन्यासार्थापतिरलङ्कारयोः सङ्करः' वंशस्थं वृत्तम् ।

समासः—तव ईक्षणं तस्मात् त्वदीक्षणात् । विश्वसितिः अन्तरात्मा यस्य स विश्वसिताऽन्तरात्मा, तस्य विश्वसितान्तारात्मनः । प्राणिनः वधः प्राणिवधः । विश्वासं जुषन्त इति विश्वासजुषः, तेषां विश्वासजषाम् । द्विषन्ति ते द्विषः, तेषां द्विषाम् ।

(८६) पदे पदे सन्ति भटा रणोद्भटा न तेषु हिंसारस एष पूर्यते ?
धिगीदृशं ते नृपतेः कुविक्रमं कृपाश्रये यः कृपणे पतत्रिणि ॥
१।१३२॥

**प्रसङ्गः**—मध्येकाननं तडागस्यान्तिके नरपतिना नलेन संगृहीतो हिरण्मय-हंस आत्मानं मोचयितुम् असमर्थः सन्—'पृथिव्यामिह रणोद्भटानां शूराणां सत्स्वपि भवतो हिंसारसः पूर्ति नाधिगच्छति, एतावता नृपतेरीदृशं कुविक्रमं धिक्' इति निगदन् राजानं नलं भृशमुपालभते ।

**अन्वयः**—रणोद्भटाः भटाः पदे पदे सन्ति, एष हिंसारसः तेषु न पूर्यते ? नृपतेः ते ईदृशं कुविक्रमं धिक्, यः कृपाऽऽश्रये कृपणे पतत्रिणि ( क्रियते ) ।

**व्याख्या**—रणोद्भटाः=सङ्ग्रामप्रचण्डाः, भटाः=योद्धारः, पदे पदे=प्रतिपदं, सन्ति=सर्वत्र विद्यन्ते । ( तथापि ) एषः=अयं, हिंसारसः=हिंसा-रागः, तेषु=युद्धकर्तृषु, न पूर्यते=परिपूर्णतां नोपैति ? इति काकुः । नृपतेः=भूपतेः, ते=तव, ईदृशं=एवंप्रकारकं, कुविक्रमं=कुत्सितपराक्रमं, धिक्=निन्दा, यः=कुविक्रमः, कृपाऽऽश्रये=करुणाविषये, कृपणे=दीने, पतत्रिणि=पक्षिणि, 'क्रियते' इति शेषः । अस्मिन् श्लोके छेकानुप्रासयमकालङ्कारयोः सङ्करः, वंशस्थं वृत्तम् ।

**समासः**—रणेषु उद्भटाः रणोद्भटाः । हिंसायाः रसः हिंसारसः । कुत्सितः विक्रमः, तं कुविक्रमं । कृपाया आश्रयः, तस्मिन् कृपाश्रये ।

(८७) फलेन मूलेन च वारिभूरुहां मुनेरिवेत्थं मम यस्य वृत्तयः ।
त्वयाऽद्य तस्मिन्नपि दण्डधारिणा कथं न पत्या धरणी ह्रणीयते ?
॥ १।१३३ ॥

**प्रसङ्गः**—'यथा दुर्वृत्ते भर्तरि वधूर्लज्जते तथैव मुनितुल्येऽनपराधेऽपि मयि दण्डाधारिणा भवता राज्ञा धरित्रीरियं कथं न त्रपते' इत्येवंरूपेण निगदन् हिरण्मयहंसो नरपतिं नलमत्र भृशमाक्षिपति ।

**अन्वयः**—यस्य मम मुनेः इव वारि भूरुहां फलेन मूलेन च इत्थं वृत्तयः, तस्मिन् अपि दण्डधारिणा पत्या त्वया अद्य धरणी कथं न ह्रणीयते ?

**व्याख्या**—यस्य=पूर्वोक्तस्य, मम=हंसस्य, मुनेः=ऋषेः, इव=यथा, वारिभूरुहां=जलधरित्र्युत्पन्नानां, पद्मतरूणामित्याशयः, फलेन=सस्येन, मूलेन च=कन्दादिना च, इत्थं=एवंप्रकारेण, वृत्तयः=जीविकाः विद्यन्त इति शेषः, तस्मिन् अपि=ऋषितुल्येऽपि, निर्दोषेऽपीति भावः, दण्डधारिणा=

अदण्डचदण्डकेनेत्याशयः, पत्या=स्वामिना, त्वया=भावता नलेन, अद्य= अस्मिन् वासरे, धरणी=भूमिः, कथं=केन प्रकारेण, न=नहि, ह्णीयते= त्रपते। उपमालङ्कारोऽत्र, वंशस्थं वृत्तम्।

**समासः**—वारि च भूश्च वारिभुवौ, वारिभुवोः रोहन्तीति वारिभूरुहः, तेषां वारिभूरुहाम्। दण्डं धारयतीति तच्छीलः दण्डधारी, तेन दण्डधारिणा।

(८८) मदेकपुत्रा जननी जराऽऽतुरा,
नवप्रसूतिर्वरटा तपस्विनी।
गतिस्तयोरेष जनस्तमर्दय-
न्नहो ! विधे ! त्वां करुणा रुणद्धि नो ॥१।१३५॥

**प्रसङ्गः**—उपवनमध्ये तडागस्यान्तिके विचरिता भूपतिना नलेनोत्कतया सन्धृतो हैमपक्षान्वितो हंसः विहितेऽपि बहुप्रयासे आत्मानं विमोचयितुमक्षमः सन् राजानं नलं बह्वाक्षिप्यान्ते सकरुणं विलापं विदधन्नग्रे तं प्रति ब्रूतेऽत्र।

**अन्वयः**—जननी मदेकपुत्रा जराऽऽतुरा, वरटा नवप्रसूतिः तपस्विनी, एष जनः तयोः गतिः, तम् अर्दयन् हे विधे ! त्वां करुणा नो रुणद्धि ? अहो !।

**व्याख्या**—जननी=माता, मदेकपुत्रा=मदेकतनया, मद्विना न कोऽपि तस्याः रक्षक इत्याशयः, जराऽऽतुरा=वार्धक्यपीडिताः, प्रसवेऽसमर्था इत्याशयः, वरटा=हंसयोषित्, नवप्रसूतिः=अचिरप्रसवाः, (अतः) तपस्विनी=शोचनीया, एषः=अयं, जनः=पुरुषः, तयोः=जायाजनन्योः, गतिः=शरणं, तम्= तादृशं शरणभूतं जनं माम्, अर्दयन्=सम्पीडयन्, हे विधे !=भो विधातः, त्वां =भवन्तं, करुणा=दया, नो=नहि, रुणद्धि=निवारयति ? इति काकुः, अहो=आश्चर्यम्, विधिर्नृशंसतर इत्याशयः। अस्मिन् श्लोके विशेषणानां साभिप्रायत्वात् परिकरालङ्कारः 'उक्तैर्विशेषणैः साऽभिप्रायैः परिकरो मतः' इति लक्षणात्। करुणो रसः, प्रसादो गुणः, वैदर्भी रीतिश्चापि विद्यते। वंशस्थं वृत्तम् 'जतौ तु वंशस्थमुदीरितं जरौ' इति लक्षणात्।

**समासः**—अहम् एव एकः पुत्रः यस्याः सा मदेकपुत्रा। जरया आतुरा जराऽऽतुरा। नवा=नूतना, प्रसूतिः=प्रसवः, यस्याः सा नवप्रसूतिः।

(८९) मुहूर्तमात्रं भवनिन्दया दयासखाः सखायः स्रवदश्रवो मम।
निवृत्तिमेष्यन्ति परं दुरुत्तरस्त्वयैव मातः ! सुतशोकसागरः ॥१।१३६॥

**प्रसङ्गः**—द्रष्टव्यम्, श्लो. ८८

**अन्वयः**—हे मातः ! मम सखायः दयासखाः भवनिन्दया मुहूर्तमात्रं स्रवदश्रवः ( सन्तः ) निवृत्तिम् एष्यन्ति, परं त्वया एव सुतशोकसागरः दुस्तरः ।

**व्याख्या**—जननीमुद्दिश्य शोकं विदधाति हंसोऽत्र—हे मातः=भो जननि ! मम=हंसस्य, सखायः=सुहृदः, दयासखाः=करुणासहचराः, भवनिन्दया=संसारगर्हणेन, मुहूर्तमात्रं=क्षणमात्रं, स्रवदश्रवः=गलिताश्रवः ( सन्तः ), निवृत्तिम्=शोकोपरतिम् । एष्यन्ति=गमिष्यन्ति, परं=किन्तु, त्वया=भवत्या, एव=निश्चयेन, सुतशोकसागरः=तनयदुःखपारावारः, दुरुत्तरः=दुस्तरः । रूपकालङ्कारोऽत्र, वंशस्थं वृत्तम् ।

**समासः**—दयया सखायः दयासखाः । भवस्य निन्दा, तया भवनिन्दया । मुहूर्तम् एव मुहूर्तमात्रं, तत् मुहूर्तमात्रम् । स्रवन्ति अश्रूणि येषां ते स्रवदश्रवः । सुतस्य शोकः, स एव सागरः, सुतशोकसागरः । दुःखेन उत्तरीतुं शक्यः दुरुत्तरः ।

(१०) 'मदर्थसन्देशमृणालमन्थरः
प्रियः किमद्दूर' इति त्वयोदिते ।
विलोकयन्त्या रुदतोऽथ पक्षिणः
प्रिये ! स कीदृग्भविता तव क्षणः ।। १।१३७।।

**प्रसङ्गः**—द्रष्टव्यम्, श्लो० ८८ ।

**अन्वयः**—हे प्रिये ! 'मदर्थसन्देशमृणालमन्थरः प्रियः कियद्दूरे' इति त्वया उदिते, अथ रुदितः पक्षिणः विलोकयन्त्याः तव स क्षणः कीदृक् भविता ?

**व्याख्या**—साम्प्रतं निजवनितामुद्दिश्य विलपति हंस—हे प्रिये !=हे दयिते !, मदर्थसन्देशमृणालमन्थरः=मदर्थवाचिकबिसप्रेषणविलम्बितप्रवृत्तिः; प्रियः=वल्लभः, कियद्दूरे=किं परिमाणविप्रकृष्टप्रदेशे, विद्यत इति शेषः । इति=अनेन प्रकारेण, त्वया=भवत्या, उदिते=कथिते सति, अथ=प्रश्नानन्तरं, रुदतः=अश्रूणि विसृजतः, अनिष्टोच्चारणाऽसामर्थ्येनेति भावः, पक्षिणः खगान्, इतो गतानिति शेषः, विलोकयन्त्याः=पश्यन्त्याः, तव=भवत्याः, सः=तादृशः, क्षणः=कालः, कीदृक्=कीदृशः भविता=भविष्यति, वज्रपातसदृशोऽसहनीयो भविष्यतीति भावः । अस्मिन् श्लोके शोकोदयात् भावोदयालङ्कारः, वंशस्थं वृत्तम् ।

**समासः**—मह्यम् इमे मदर्थे, सन्देशश्च मृणालं च सन्देशमृणाले,, मदर्थे च ते सन्देशमृणाले, तयोः मन्थरः, मदर्थसन्देशमृणालमन्थरः । कियच्च तत् दूरं तस्मिन् कियद्दूरे । रुदन्तीति रुदन्तः, तान् रुदतः ।

अदण्डयदण्डकेनेत्याशयः, पत्या=स्वामिना, त्वया=भावता नलेन, अद्य= अस्मिन् वासरे, धरणी=भूमिः, कथं=केन प्रकारेण, न=नहि, ह्रणीयते= त्रपते। उपमालङ्कारोऽत्र, वंशस्थं वृत्तम्।

समासः—वारि च भूश्च वारिभुवौ, वारिभुवोः रोहन्तीति वारिभूरुहः, तेषां वारिभूरुहाम्। दण्डं धारयतीति तच्छीलः दण्डधारी, तेन दण्डधारिणा।

(८८) मदेकपुत्रा जननी जराऽऽतुरा,
नवप्रसूतिर्वरटा तपस्विनी।
गतिस्तयोरेष जनस्तमर्दय-
न्नहो! विधे! त्वां करुणा रुणद्धि नो॥१।१३५॥

प्रसङ्गः—उपवनमध्ये तडागस्यान्तिके विचरिता भूपतिना नलेनोत्कतया सन्धृतो हैमपक्षान्वितो हंसः विहितेऽपि बहुप्रयासे आत्मानं विमोचयितुमक्षमः सन् राजानं नलं बह्वाक्षिप्यान्ते सकरुणं विलापं विदधन्नग्रे तं प्रति ब्रूतेऽत्र।

अन्वयः—जननी मदेकपुत्रा जराऽऽतुरा, वरटा नवप्रसूतिः तपस्विनी, एष जनः तयोः गतिः, तम् अर्दयन् हे विधे! त्वां करुणा नो रुणद्धि? अहो!।

व्याख्या—जननी=माता, मदेकपुत्रा=मदेकतनया, मद्विना न कोऽपि तस्याः रक्षक इत्याशयः, जराऽऽतुरा=वार्धक्यपीडिताः, प्रसवेऽसमर्था इत्याशयः, वरटा=हंसयोषित्, नवप्रसूतिः=अचिरप्रसवाः, ( अतः ) तपस्विनी=शोच-नीया, एषः=अयं, जनः=पुरुषः, तयोः=जायाजनन्योः, गतिः=शरणं, तम्= तादृशं शरणभूतं जनं माम्, अर्दयन्=सम्पीडयन्, हे विधे!=भो विधातः, त्वां =भवन्तं, करुणा=दया, नो=नहि, रुणद्धि=निवारयति? इति काकुः, अहो=आश्चर्यम्, विधिर्नृशंसतर इत्याशयः। अस्मिन् श्लोके विशेषणानां साभिप्रायत्वात् परिकरालङ्कारः 'उक्तैर्विशेषणैः साऽभिप्रायैः परिकरो मतः' इति लक्षणात्। करुणो रसः, प्रसादो गुणः, वैदर्भी रीतिश्चापि विद्यते। वंशस्थं वृत्तम् 'जतौ तु वंशस्थमुदीरितं जरौ' इति लक्षणात्।

समासः—अहम् एव एकः पुत्रः यस्याः सा मदेकपुत्रा। जरया आतुरा जराऽऽतुरा। नवा=नूतना, प्रसूतिः=प्रसवः, यस्याः सा नवप्रसूतिः।

(८९) मुहूर्तमात्रं भवनिन्दया दयासखाः सखायः स्रवदश्रवो मम।
निवृत्तिमेष्यन्ति परं दुरुत्तरस्त्वयैव मातः! सुतशोकसागरः॥
१।१३६॥

प्रसङ्गः—द्रष्टव्यम्, श्लो. ८८

**अन्वयः**—हे मातः ! मम सखायः दयासखाः भवनिन्दया मुहूर्तमात्रं स्रवदश्रवः ( सन्तः ) निवृत्तिम् एष्यन्ति, परं त्वया एव सुतशोकसागरः दुस्तरः ।

**व्याख्या**—जननीमुद्दिश्य शोकं विदधाति हंसोऽत्र—हे मातः=भो जननि ! मम=हंसस्य, सखायः=सुहृदः, दयासखाः=करुणासहचराः, भवनिन्दया=संसारगर्हणेन, मुहूर्तमात्रं=क्षणमात्रं, स्रवदश्रवः=गलिताश्रवः ( सन्तः ), निवृत्तिम्=शोकोपरतिम् । एष्यन्ति=गमिष्यन्ति, परं=किन्तु, त्वया=भवत्या, एव=निश्चयेन, सुतशोकसागरः=तनयदुःखपारावारः, दुरुत्तरः=दुस्तरः । रूपकालङ्कारोऽत्र, वंशस्थं वृत्तम् ।

**समासः**—दयया सखायः दयासखाः । भवस्य निन्दा, तया भवनिन्दया । मुहूर्तम् एव मुहूर्तमात्रं, तत् मुहूर्तमात्रम् । स्रवन्ति अश्रूणि येषां ते स्रवदश्रवः । सुतस्य शोकः, स एव सागरः, सुतशोकसागरः । दुःखेन उत्तरीतुं शक्यः दुरुत्तरः ।

(९०) 'मदर्थसन्देशमृणालमन्थरः
प्रियः किमद्दूर' इति त्वयोदिते ।
विलोकयन्त्या रुदतोऽथ पक्षिणः
प्रिये ! स कीदृग्भविता तव क्षणः ।। १।१३७।।

**प्रसङ्गः**—द्रष्टव्यम्, श्लो० ८८ ।

**अन्वयः**—हे प्रिये ! 'मदर्थसन्देशमृणालमन्थरः प्रियः कियद्दूरे' इति त्वया उदिते, अथ रुदितः पक्षिणः विलोकयन्त्याः तव स क्षणः कीदृक् भविता ?

**व्याख्या**—साम्प्रतं निजवनितामुद्दिश्य विलपति हंस—हे प्रिये !=हे दयिते !, मदर्थसन्देशमृणालमन्थरः=मदर्थवाचिकबिसप्रेषणविलम्बितप्रवृत्तिः; प्रियः=वल्लभः, कियद्दूरे=किं परिमाणविप्रकृष्टप्रदेशे, विद्यत इति शेषः । इति=अनेन प्रकारेण, त्वया=भवत्या , उदिते=कथिते सति, अथ=प्रश्नानन्तरं, रुदतः=अश्रूणि विसृजतः, अनिष्टोच्चारणाऽसामर्थ्येनेति भावः, पक्षिणः खगान्, इतो गतानिति शेषः, विलोक्यन्त्याः=पश्यन्त्याः, तव=भवत्याः, सः=तादृशः, क्षणः=कालः, कीदृक्=कीदृशः भविता=भविष्यति, वज्रपातसदृशोऽसहनीयो भविष्यतीति भावः । अस्मिन् श्लोके शोकोदयात् भावोदयालङ्कारः, वंशस्थं वृत्तम् ।

**समासः**—मह्यम् इमे मदर्थे, सन्देशश्च मृणालं च सन्देशमृणाले,, मदर्थे च ते सन्देशमृणाले, तयोः मन्थरः, मदर्थसन्देशमृणालमन्थरः । कियच्च तत् दूरं तस्मिन् कियद्दूरे । रुदन्तीति रुदन्तः, तान् रुदतः ।

(९१) कथं विधातर्मयि पाणिपङ्क-
जात्तव प्रियाशैत्यमृदुत्वशिल्पिनः ।
'विमोक्ष्यसे वल्लभये'ति निर्गता
लिपिर्ललाटन्तप निष्ठुराऽक्षरा ॥१।१३८॥

प्रसङ्गः—द्रष्टव्यम्, श्लो० ८८ ।

अन्वयः—हे विधातः ! प्रियाशैत्यमृदुत्वशिल्पिनः तव पाणिपङ्कजात् मयि 'वल्लभया वियोक्ष्यसे' इति ललाटन्तपनिष्ठुराऽक्षरा लिपिः कथं निर्गता ?

व्याख्या—हे विधातः !=भो विधे !, प्रियाशैत्यमृदुत्वशिल्पिनः=दयिताङ्गशैत्यकोमलत्वविनिर्मातुः, तव=भवतः, पाणिपङ्कजात्=हस्तारविन्दात्, मयि=मद्विषये, वल्लभया=दयितया साकं, वियोक्ष्यसे=वियोगं लप्स्यसे, इति=एवं प्रकारात्मिका, ललाटन्तपनिष्ठुराऽक्षरा=भालतापिकर्णकठोरवर्णा, लिपिः=अक्षरविन्यासः कथं=केन प्रकारेण, निर्गता=निःसृता । मद्दयिताशैत्यकोमलत्वविनिर्मातुस्तव करकमलात् मद्भाले वनितावियोजनसूचककठिनलिपिनिर्मितिः आश्चर्योत्पादिकेत्याशयः । अस्मिन् श्लोके कारणात् विरुद्धकार्यस्योत्पत्तिकथनात् विषमालङ्कारः 'विरुद्धकार्यस्योत्पत्तिर्यत्रानर्थस्य भावयेत् । विरूपघटना वा स्याद्विषमालङ्कृतिर्मते'ति लक्षणात् । वंशस्थं वृत्तम् ।

समासः—विदधातीति विधाता, तत्सम्बुद्धौ हे विधातः ! शीतस्य भावः शैत्यम्, मृदोर्भावः मृदुत्वम्, शैत्यं च मृदुत्वं च, शिल्पम् अस्याऽस्तीति शिल्पी, प्रियायाः शैत्यमृदुत्वे, तयोः शिल्पि, तस्य प्रियाशैत्यमृदुत्वशिल्पिनः । पाणिः पङ्कजम् इव, तस्मात् पाणिपङ्कजात् । ललाटं तपन्तीति ललाटन्तपानि, ललाटन्तपानि निष्ठुराणि अक्षराणि यस्याः सा ललाटन्तपनिष्ठुराऽक्षरा ।

(९२) अपि स्वयूथ्यैरशनिक्षतोपमं
ममाऽद्य वृत्तान्तमिमं बतोदिता ।
मुखानि लोलाऽक्षि ! दिशामसंशयं
दशाऽपि शून्यानि विलोकयिष्यसि ॥१।१३९॥

प्रसङ्गः—द्रष्टव्यम्, श्लो०-८८ ।

अन्वयः—अपि (च) अद्य स्वयूथ्यैः अशनिक्षतोपमं मम इमं वृत्तान्तम् उदिता (सती) हे लोलाक्षि ! दश अपि दिशां मुखानि शून्यानि विलोकयिष्यसि असंशयं बत !

व्याख्या—अपि च=अन्यच्च, अद्य=अस्मिन् दिने, स्वयूथ्यैः=निजसङ्घ-

चरैर्हंसैः, अशनिक्षतोपमं=वज्रप्रहारतुल्यं, मम=प्रियस्य, इमम्=एतं, वृत्तान्तम्=उदन्तं, नरपतिहस्तपतनरूपमिति भावः, उदिता=उक्ता सती, हे लोलाक्षि=हे चञ्चलनयने, दश अपि=दशसंख्यकान्यपि, दिशां=ककुभां, प्राच्यादीनामित्याशयः, मुखानि=सम्मुखस्थानानि, शून्यानि=रिक्तानि, विलोकयिष्यसि=द्रक्ष्यसि, मद्वियोगादित्याशयः, असंशयम्=नास्ति सन्देहोऽत्र, बत=इति खेदे। उपमालङ्कारोऽत्र, वंशस्थं वृत्तम् 'जतौ तु वंशस्थमुदीरितं जरौ' इति लक्षणात्।

समासः—यूथे भवा यूथ्याः, स्वस्य यूथ्याः, तैः स्वयूथ्यैः। अशनिना क्षतम्, तद् उपमा ( सादृश्यम् ) यस्य, तम् अशनिक्षतोपमम्। लोले अक्षिणी यस्याः सा लोलाक्षी, तत्सम्बुद्धौ हे लोलाक्षि।

( ९३ ) ममैव शोकेन विदीर्णवक्षसा
त्वयाऽपि चित्राङ्गि ! विपद्यते यदि।
तदस्मि दैवेन हतोऽपि हा ! हतः
स्फुटं यतस्ते शिशवः पराऽसवः ॥१।१४०॥

प्रसङ्गः—द्रष्टव्यम्, श्लो० ८८।

अन्वयः—हे चित्राङ्गि ! मम शोकेन एव विदीर्णवक्षसा त्वया अपि विपद्यते यदि; तद् दैवेन हतः, स्फुटं हतः अस्मि, हा ! यतः ते शिशवः पराऽसवः।

व्याख्या—हे चित्राङ्गि !=भो विचित्रगात्रे ! लोहितचञ्चुचरणत्वादित्याशयः, मम=सन्धृतस्य हंसस्य, शोकेन=दुःखेन, एव=निश्चयेन, विदीर्णवक्षसा =विदलितहृदा, त्वया अपि=भवत्या अपि, विपद्यते यदि म्रियते चेत्, तद्= तर्हि, दैवेन=भागधेयेन, हतः=नाशितः, स्फुटं=सुस्पष्टं, पुनः=भूयोऽपि, हतः=नाशितः, अस्मि=भवामि, हा=इति विषादे। यतः=यस्माद्धेतोः, ते=तव, शिशवः=अर्भकाः, पराऽसवः=मृताः, भवेयुरिति, शेषः, मद्वियोगेन त्वमप्यसून् त्यक्ष्यसि, चेत् जननीजनकयोरभावेनाऽस्मदर्भका अपि मरिष्यन्तीति दैवहतोऽहं पुनर्हतो भविष्यामीत्याशयः। अस्मिन् श्लोके शोकस्य स्थायिभावसत्वात् करुणो रसोः। वंशस्थं वृत्तम्।

समासः—चित्राणि अङ्गानि यस्याः सा चित्राङ्गी, तत् सम्बुद्धौ हे चित्राङ्गी! विदीर्णं वक्षो यस्याः सा विदीर्णवक्षाः, तया विदीर्णवक्षसा। परागता असवः (प्राणाः) येषां, ते पराऽसवः।

(९४) तवाऽपि हा ! हा विरहात्क्षुधाकुलाः
कुलाय कूलेषु विलुठ्य तेषु ते ।
चिरेण लब्धा बहुभिर्मनोरथै-
र्गताः क्षणेनाऽस्फुटितेक्षणा मम ॥१।१४१॥

प्रसङ्गः—द्रष्टव्यम्, श्लो० ८८।

अन्वयः—( हे प्रिये ! ) बहुभिः मनोरथैः चिरेण लब्धाः अस्फुटितेक्षणाः मम ते अपि विरहात् क्षुधा आकुलाः तेषु कुलायकूलेषु विलुठ्य क्षणेन गताः, हा ! हा !!

व्याख्या—( हे प्रिये !=हे दयिते ! ) बहुभिः=प्रभूतैः, मनोरथैः=अभिलाषैः, चिरेण=चिरकालमतीत्य, लब्धाः=अधिगताः, ( एवं च ) अस्फुटितेक्षणाः=अनुन्मीलितलोचनाः, मम=हंसस्य, ते अपि=वरटायाः तवापि, विरहात्=वियोगात्, क्षुधा=बुभुक्षया, आकुलाः=भृशं सम्पीडिताः सन्तः, तेषु=स्वसम्पादितेषु, कुलायकूलेषु=नीडान्तिकेषु, विलुठ्य=परिवृत्य, क्षणेन=स्वल्पकालेनैव, गताः=पञ्चत्वमधिगताः, भविष्यन्तीति शेषः, हा ! हा !!=खेदे । बहुभिर्मनोरथैश्चिरकालेनासादिता अस्मच्छावका आवयोरभावेन स्वल्पकालेनैव यमसदनं गमिष्यन्तीत्याशयः । अस्मिन् श्लोके करुणो रसः, वंशस्थं वृत्तम् ।

समासः—न स्फुटिते, अस्फुटिते ईक्षणे येषां ते अस्फुटितेक्षणाः । कुलायस्य कूलानि, तेषु कुलायकूलेषु ।

( ९५ ) सुताः ! कमाहूय चिराय चूङ्कृतै-
र्विधाय कम्प्राणि मुखानि कं प्रति ।
कथासु शिष्यध्वमिति प्रमील्य सः
सुतस्य सेकाद् बुबुधे नृपाऽश्रुणः ॥१।१४२॥

प्रसङ्गः—'मध्येकाननं तडागस्यान्तिके विचरता नरपतिना नलेनोत्कतया सन्धृतो हिरण्मयहंसो बहुप्रयासे विहितेऽपि यदा मुक्तिं न प्राप तदादौ राजानं भृशमाक्षिपन्नन्ते करुणरसवाचः विस्तारयन् विलपन् सन् मातरं दयिताञ्चोद्दिश्य शोकवाचो विस्तार्यात्र सुतानभिलक्ष्य चिन्तातर्ति वितन्वानो मूर्च्छामधिगतवान्, तदनन्तरं तद्वचनमाकर्णयतः नृपस्याश्रुणः सेकात् संज्ञामवाप' इत्यस्य मनोरमं वर्णनं विदधाति महाकविरत्र ।

अन्वयः—,हे सुताः ! चूङ्कृतैः चिराय कम् आहूय कं प्रति मुखानि

कम्प्राणि विधाय कथासु शिष्यध्वम्' इति प्रमील्य सः सुतस्य नृपाऽश्रुणः सेकात् स बुबुधे ।

व्याख्या—'हे सुताः !=भो आत्मजाः ! चूङ्कृतैः=चूङ्कारैः, पक्षिपृथुकरुतैरित्याशयः, चिराय=चिरकालपर्यन्तम्, कं=कतरं जनं, आहूय=आकार्य, कं प्रति=कतरं प्रति, मुखानि=आननानि, कम्प्राणि=कम्पनशीलानि चपलानीति भावः, विधाय=कृत्वा, कथासु=वचनमात्रेषु, शिष्यध्वम्=कथनमात्रशेषा भवत, इति=एवं, उक्त्वेति शेषः, प्रमील्य=मूर्च्छां प्राप्य, स=हंसः, सुतस्य=दयार्द्रभावात्प्रवहतः, नृपस्याश्रुणः=नरपतिनयनजलस्य, सेकात्=सेचनात्, बुबुधे=संज्ञामधिगतवान् । स्वभावोक्तिरलङ्कारोऽत्र, वंशस्थं वृत्तम् 'जतौ तु वंशस्थमुदीरितं जरौ' इति लक्षणात् ।

समासः—नृपस्य अश्रु तस्य नृपाऽश्रुणः ।

---

## द्वितीयः सर्गः

( ९६ ) अधिगत्य जगत्यधीश्वरादथ मुक्तिं पुरुषोत्तमात्ततः ।
वचसामपि गोचरो न यः स तमानन्दमविन्दत द्विजः ॥२।१॥

प्रसङ्गः—'अस्मिन् जगति यथा कश्चन् विप्रवंशावतंसो द्विजः भुवनपतेविष्णोर्मोक्षं समासाद्यानिर्वचनीयमानन्दमधिगच्छति, तथैव स हिरण्मयहंसोऽपि नैकविधपरिदेवनानन्तरं नरपतेः नलस्य पाणिपङ्कजात् मोचनमधिगत्य वाचामविषयं सुखं समासादितवान्' इति निगदन् श्रीमहाकविः श्रीहर्षोऽत्र स्वमहाकाव्यस्य द्वितीयसर्गमारभते ।

अन्वयः—अथ स द्विजः जगत्यधीश्वरात् पुरुषोत्तमात् ततः मुक्तिम् अधिगत्य यो वचसाम् अपि गोचरो न, तम् आनन्दम् अविन्दत ।

व्याख्या—अथ=मोचनाऽनन्तरं, सः=पूर्वनिगदितः, द्विजः=पक्षी विप्रश्च, जगत्यधीश्वरात्=महीपतेः, भुवनपतेश्च, पुरुषोत्तमात्=पुरुषश्रेष्ठात्, विष्णोश्च, ततः=तस्मात् प्रकृतान्नलात् अन्यत्र प्रसिद्धाच्च, मुक्तिं=मोचनं, निर्वाणञ्च; अधिगत्य=सम्प्राप्य, यः=आनन्दः, वचसाम् अपि=वाक्यानाम् अपि, गोचरः=ग्राह्यः, न=नहि, वक्तुमशक्य इत्याशयः, तं=तादृशम्, आनन्दं=सुखं, परमानन्दं च, मोक्षजन्यमित्याशयः, अविन्दत=अलभत । अस्मिन् श्लोके द्वितीयार्थस्याप्रस्तुतत्वात् श्लेषो न, 'द्विजो ब्राह्मण इव' इति कथनादुपमाव्यङ्ग्योऽस्ति ।

एतावता शब्दार्थशक्तिमूलालङ्कारो ध्वनिरत्र। वियोगिनी नामकं वृत्तम् 'विषमे ससजा गुरुः समे, सभरालोऽथ गुरुर्वियोगिनी' इति लक्षणात्।

समासः—द्विर्जायते इति द्विजः। जगत्या अधीश्वरः, तस्मात् जगत्यधीश्वरात्। पुरुषेषु उत्तमः, तस्मात् पुरुषोत्तमात्।

( ९७ ) स गरुद्वनदुर्गदुर्ग्रहान् कटु·कीटान् दशतः सतः क्वचित्।
नुनुदे तनुकण्डुपण्डितः पटुचञ्चूपुटकोटिकुट्टनैः॥ २१४॥

प्रसङ्गः—द्रष्टव्यम्, श्लो० ९६।

अन्वयः—पण्डितः स गरुद्वनदुर्गदुर्ग्रहान् कटु दशतः क्वचित् सतः कीटान् पटुचञ्चूपुटकोटिकुट्टनैः तनकण्डु नुनुदे।

व्याख्या—पण्डितः=कीटाद्यपनयनप्रवीणः, सः=हंसः, गरुद्वनदुर्गदुर्ग्रहान्=पक्षसमूहदुर्गमस्थानदुर्ग्राह्यान्, कटु=तीक्ष्णान्, दशतः=दन्तैस्तुदतः, क्वचित्=कुत्रचित्, सतः=वर्तमानान्, कीटान्=क्षुद्रजन्तून्, पटुचञ्चूपुटकोटिकुट्टनैः=समर्थत्रोटयग्रघुट्टनैः, तनुकण्डु=अल्पसर्जु यथा तथा, नुनुने=निवारितवान्। रूपक-स्वभावोक्तिरलङ्कारयोसंसृष्टिरत्र, वियोगिनी वृत्तम् 'विषमे ससजाः गुरुः समे, सभरालोऽथ गुरुर्वियोगिनी' इति लक्षणात्।

समासः—पण्डा सञ्जाता अस्य इति पण्डितः। गरुतां वनम्, तदेव दुर्गम्, दुःखेन ग्रहीतुं शक्या दुर्ग्रहाः, गरुद्वनदुर्गदुर्ग्रहाः, तान् गरुद्वनदुर्गदुर्ग्रहान्। दशन्तीति दशन्तः, तान् दशतः। सन्तीति सन्तः, तान् सतः। चञ्चवोः पुटम्, पटु च तत् चञ्चूपुटम्, तस्य कोटिः ( अग्रभागः ), तया कुट्टनानि, तैः पटुचञ्चूपुटकोटिकुट्टनैः। तनुः कण्डुः यस्मिन् कर्मणि तद्यथा तथा तनुकण्डु।

( ९८ ) दधतो बहुशैवलक्ष्मतां धृतरुद्राक्षमधुव्रतं खगः।
स नलस्य ययौ करं पुनः सरसः कोकनदभ्रमादिव॥ २१६॥

प्रसङ्गः—'निजोपवने तडागस्यान्तिके नरपतिना नलेनोत्कतया सन्धृतो हिरण्मयहंसः पुनश्च बहुविधपरिदेवनाऽनन्तरं सम्परित्यक्तः स विहगः कियद्दूरं व्रजित्वा रक्तोत्पलभ्रमादिव भूयोऽपि भूपतेः करमाजगाम' इत्यस्य वर्णनं चारुतया विदधाति महाकविरत्र।

अन्वयः—स खगः बहुशैवलक्ष्मतां दधतः सरसः बहुशैवलक्ष्मतां दधतो नलस्य धृतरुद्राक्षमधुव्रतं करं कोकनदभ्रमात् इव पुनः ययौ।

व्याख्या—स=पूर्वकथितः, खगः=हंसः, बहुशैवलक्ष्मतां=भूरिशैवलभूमितां, दधतः=सन्धारयतः, सरसः=कासारात्, बहुशैवलक्ष्मतां=प्रचुरशिव-

प्रचुरशिवभक्तचिह्नतां, दधतः=धारयतः, नलस्य=एतन्नामकस्य भूपतेः, धृतरुद्राक्षमधुव्रतं=द्विरेफसंकाशरुद्राक्षधारकं, करं=हस्तं, कोकनदभ्रमात् =रक्तारविन्दभ्रान्तेः, इव=यथा, पुनः=भूयः, ययौ=जगाम। अस्मिन् श्लोके 'शब्दश्लेष-उपमा-उत्प्रेक्षा' इत्येतेषामलङ्काराणामङ्गाङ्गिभावसत्वात् सङ्करालङ्कारः। वियोगिनीवृत्तम् 'विषमे ससजाः गुरुः समे सभरालोऽथ गुरुर्वियोगिनी' इति लक्षणात्।

**समासः**—बहूनि शैवलानि यस्यां सा बहुशैवला, बहुशैवला क्ष्मा (भूमिः) यस्मिंस्तत् बहुशैवलक्ष्मम्, तस्य भावः तत्ता ताम् बहुशैवलक्ष्मताम्। अथवा शिवेभक्तिर्यस्य स शैवः, शैवस्य लक्ष्माणि, बहूनि शैवलक्ष्माणि यस्य स बहुशैवलक्ष्मा, तस्य भावः तत्ता ताम् बहुशैवलक्ष्मताम् दधातीति दधत्, तस्य दधतः। रुद्राक्षा मधुव्रता इव रुद्राक्षमधुव्रताः, धृता रुद्राक्षमधुव्रता येन, तम् धृतरुद्राक्षमधुव्रतम्। कोकनदस्य भ्रमः, तस्मात् कोकनदभ्रमात्।

(१९) पतगश्चिरकाललालनादतिविस्रम्भमवापितो नु सः।
अतुलं विदधे कुतूहलं भुजमेतस्य भजन्महीभुजः॥ २।७॥

**प्रसङ्गः**—'नरपतिना नलेन सन्त्यक्तो हिरण्मयहंसो नलस्य करे पुनः समागत्य तस्य चेतसि समधिकं कौतुकमुत्पादयामास' इत्यस्य रमणीयं वर्णनं विदधाति महाकविरत्र।

**अन्वयः**—स पतगः चिरकाललालनात् अतिविस्रम्भम् अवापितो नु (किञ्च) एतस्य महीभुजः भुजं भजन् अतुलं कुतूहलं विदधे।

**व्याख्या**—हंसस्य स्वयमागमनादुत्प्रेक्षतेऽत्र नरपतिः—सः=पूर्वोक्तः, पतगः=हंसः, चिरकाललालनात्=बहुसमयोपलालनात्, अतिविस्रम्भम्=अतिविश्वासम्, अवापितो नु=प्रापितः किम्, नो चेत् कथं पुनः स्वयमागच्छेदिति भावः। एतस्य=अस्य, महीभुजः=भूपतेः नलस्य, भुजं=हस्तं, भजन्=स्वयं सेवमानः, अतुलं=अनुपमं, कुतूहलं=कौतुकं, विदधे=विहितवान्। अस्मिन् श्लोके उत्प्रेक्षा-काव्यलिङ्गालङ्कारयोः संसृष्टिः। वियोगिनीवृत्तम्।

**समासः**—पतैः (पक्षैः) गच्छतीति पतगः। चिरकालं लालनं, तस्मात् चिरकाललालनात्। अत्यन्तं विस्रम्भः, तम् अतिविस्रम्भम्। महीं भुनक्तीति महीभुक्, तस्य महीभुजः। अविद्यमाना तुला (उपमा) यस्य, तत् अतुलम्।

( १०० ) मृगया न विगीयते नृपैरपि धर्माऽऽगममर्मपारगैः ।
स्मरसुन्दर ! मां यदत्यजस्तव धर्मः स दयोदयोज्ज्वलः ॥
२ । ९ ॥

प्रसङ्गः—'निजोपवने विचरता तडागस्यान्तिके नरपतिना नलेनोत्कतया सन्धृतो राजहंसो नैकविधपरिदेवनेन परित्यक्तः नलभैम्योः प्रेमप्रपञ्चाभिनयस्य नूतनसूत्रधारः पूर्वोक्तो हंसः भूयः भूपतेः करमागत्य कौतुकसुधातरङ्गेषु तं निमज्जन् जगादि'त्यस्य वर्णनं विदधाति महाकविरत्र ।

अन्वयः—धर्माऽऽगममर्मपारगैः अपि नृपैः मृगया न विगीयते, ( तथाऽपि ) हे स्मरसुन्दर ! मां यत् अत्यजः, स तव दयोदयोज्ज्वलः धर्मः ।

व्याख्या—धर्माऽऽगममर्मपारगैः अपि=धर्मशास्त्रतत्त्वपारदर्शिभिरपि, नृपैः=भूपैः, मृगया=आखेटः, न=नहि, विगीयते=गर्ह्यते, ( तथाऽपि ) हे स्मरसुन्दर !=भो मनसिजमनोरम ! मां=मृगयालक्ष्यभूतं हंसं, यत्, अत्यजः=त्यक्तवान्, सः=त्यागः, तव=भवतो नृपस्य, दयोदयोज्ज्वलः=करुणाऽवतारविमलः, धर्मः=सुकृतम् । भवान् न केवलमाकारत उज्ज्वलोऽपितु दयाधर्मरूपेणापि धवलोऽस्ति । त्यागं प्रति धर्मकारणतासत्वात् पदार्थहेतुकं काव्यलिङ्गमलङ्कारोऽत्र । वियोगिनी वृत्तम् 'विषमे ससजा गुरुः समे सभरा लोऽथ गुरुर्वियोगिनी' इति लक्षणात् ।

समासः—धर्मस्य आगमाः, तेषां मर्माणि, पारं गच्छन्तीति पारगाः, धर्माऽऽगममर्मणां पारगाः, तैः धर्माऽऽगममर्मपारगैः । स्मर इव सुन्दरः, तत्सम्बुद्धौ हे स्मरसुन्दर ! दयायाः उदयः, तेन उज्ज्वलः, दयोदयोज्ज्वलः ।

( १०१ ) अबलस्वकुलाऽशिनो झषान्निजनीडद्रुमपीडिनः खगान् ।
अनवद्यतृणार्दिनो मृगान् मृगयाऽघाय न भूभृतां घ्नताम् ॥
२ । १० ॥

प्रसङ्गः—द्रष्टव्यम्, श्लो० १०० ।

अन्वयः—अबलस्वकुलाऽशिनो झषान् ( घ्नताम् ) निजनीडद्रुमपीडिनः खगान् ( घ्नताम् ) अनवद्यतृणार्दिनो मृगान् घ्नताम् भूभृतां मृगया अघाय न ।

व्याख्या—अबलस्वकुलाऽशिनः=दुर्बलनिजवंशभक्षकान्, झषान्=मत्स्यान्, निजनीडद्रुमपीडिनः=स्वकुलायमहीरुहपीडकान्, खगान्=विहगान्, अनवद्यतृणार्दिनः=अनपराधितृणहिंसकान्, मृगान्=पशून्, घ्नताम्=हिंसताम्, भूभृतां=महीपालानां, मृगया=आखेटः, अघाय=पापाय, न=नहि, भवतीति

श्लेषः। अस्मिन् श्लोके अप्रस्तुतप्रशंसा-काव्यलिङ्गालङ्कारयोरङ्गाङ्गिभाव-सत्वात् सङ्करः। वियोगिनी वृत्तम्।

समासः—अविद्यमानं बलं यस्य यत् अबलम्, स्वस्य कुलम्, अबलं च तत् स्वकुलम्, अबलस्वकुलम् अश्नन्तीति तच्छीलाः, तान् अबलस्वकुलाऽशिनः। नीडानां द्रुमाः, निजाश्च ते नीडद्रुमाः, तान् पीडयन्तीति तच्छीलाः, तान् निज-नीडद्रुमपीडिनः। न उद्यन्त इति अवद्यानि, न अवद्यानि अनवद्यानि, अनव-द्यानि च तानि तृणानि, तानि अर्दन्तीति तच्छीलाः तान् अनवद्यतृणाऽर्दिनः। घ्नन्तीति घ्नन्तः, तेषां घ्नताम्। भुवं बिभ्रतीति भूभृतः, तेषां भूभृताम्।

(१०२) यदवादिषमप्रियं तव प्रियमाधाय नुनुत्सुरस्मि तत्।
कृतमातपसंज्वरं तरोरभिवृष्याऽमृतमंशुमानिव॥
२।१११॥

प्रसङ्गः—'भो राजन्! यदप्रीतिजनकं गिरं त्वां प्रति यदहमवोचम्, तत्तव प्रियं विधाय दूरीकर्तुमभिलषामि' इति प्रोच्य हिरण्मयहंसो राजानं नलं प्रति पुनः स्वागमनकारणं विनिवेदयति।

अन्वयः—(हे राजन्!) तव यत् अप्रियम् अवादिषम्, प्रियम् आधाय तत् तरोः कृतम् आतपसंज्वरम् अमृतम् अभिवृष्य अंशुमान् इव नुनुत्सुः अस्मि।

व्याख्या—(हे राजन्!=भो नरपते!) तव=भवतः, यत्=यत्किमपि, अप्रियम्=प्रीतिविरहितं वाक्यं, अवादिषम्=अवोचम्, प्रियम्=प्रीत्युत्पादकं वाक्यं आधाय=निधाय, निगद्येति भावः, तत्=अप्रियं, तरोः=विटपस्य, कृतं =स्वयमात्मनाविहितं, आतपसंज्वरं=द्योतकृतं सन्तापम्, अमृतम्=उदकम्, अभिवृष्य=वर्षित्वा, अंशुमान् इव=भास्कर इव, नुनुत्सुः=प्रमार्ष्टुमिच्छुः, अस्मि=भवामि। उपमालङ्कारोऽत्र, वियोगिनीवृत्तम्।

समासः—न प्रियं, तत् अप्रियम्। आतपेन सञ्ज्वरः, तम् आतपसञ्ज्वरम्। प्रशस्ता अंशवः सन्ति यस्य सः अंशुमान्। नोदितुमिच्छुः नुनुत्सुः।

(१०३) पतगेन मया जगत्पतेरुपकृत्यै तव किं प्रभूयते।
इति वेद्मि न तु त्यजन्ति मां तदपि प्रत्युपकर्तुमर्तयः॥
२।११२॥

प्रसङ्गः—'क्षुद्रोऽयं पतगः भवादृशां वां पृथ्वीपालानां प्रत्युपकर्तुं कियान् क्षमः? इत्यहं वेद्मि' इति प्रोच्य हिरण्मयहंसोऽत्र राजानं नलं प्रति स्वनिर-भिमानित्वं प्रदर्शयति।

अन्वयः—पतगेन मया जगत्पतेः तव उपकृत्यै किं प्रभूयते ? इति वेद्मि, तदपि । अर्तयस्तु मां प्रत्युपकर्तुं न त्यजन्ति ।

व्याख्या—पतगेन=खगेन, मया=हंसेन, क्षुद्रजन्तुनेति भावः, जगत्पतेः =सार्वभौमस्य, तव=राज्ञो नलस्य, उपकृत्यै=उपकाराय, किं प्रभूयते= किं क्षम्यते ? समर्थेन न भूयत इत्याशयः । इति=एवं प्रकारेण, वेद्मि= अवगच्छामि । तदपि=तथाऽपि, अर्तयस्तु=प्रत्युपकारायोत्कण्ठारूपाः पीडास्तु, मां=पक्षिणं, प्रत्युपकर्तुं=प्रत्युपकारं विधातुं, न=नहि, त्यजन्ति=मुञ्चन्ति, प्रत्युपकरणाय प्रेरयन्तीत्याशयः । छेकानुप्रासालङ्कारोऽत्र, वियोगिनी वृत्तम् ।

समासः—जगतः पतिः, तस्य जगत्पतेः । उपकरणम् उपकृतिः, तस्यै उपकृत्यैः ।

( १०४ ) अचिरादुपकर्तुराचरेदथवात्मौपयिकीमुपक्रियाम् ।
पृथुरित्थमथाऽणुरस्तु सा न विशेषे विदुषामिह ग्रहः ॥ २।१४॥

प्रसङ्गः—'प्रत्युकर्तुरुपकारः पृथुरणु वाऽस्तु, इत्यस्मिन् विषये गुणग्राहिणो विवेकिनो जनाः विचारं न विदधति' इति निगद्य राजहंसो राजानं नलं प्रति स्वबुद्धेः वैशद्यं विशदयति ।

अन्वयः—अथवा उपकर्तुः अचिरात् औपयिकीम् उपक्रियाम् आचरेत्; इत्थं सा पृथुः अथ अणुः अस्तु, विदुषाम् इहग्रहो न ।

व्याख्या—अथवा=पक्षान्तरे, उपकर्तुः=उपकारकस्य, अचिरात्= अविलम्बात्, औपयिकीं=निजोपायसाध्याम्, उपक्रियाम्=उपकारम्, आचरेत् कुर्यात्, इत्थं=एवं सति, सा=उपकृतिः, पृथुः=अधिका, अथ=अथवा, अणुः=स्वल्पाः, अस्तु=भवतु, विदुषाम्=विवेकिनाम्, इह=अस्मिन् विषये, ग्रहः=आग्रहः, न=नहि, विद्यत इति शेषः । स्वशक्त्यनुसारेण उपकारस्य प्रत्युपकारः शीघ्रं विधातव्य इति भावः । वियोगिनी वृत्तम् ।

समासः—उपकरोतीति उपकर्ता, तस्य उपकर्तुः । उपाय एव औपयिकः, औपयिकात् आगता औपयिकी, ताम् औपयिकीम् । विदन्तीति विद्वांसः, तेषां विदुषाम् ।

( १०५ ) स जयत्यरिसार्थसार्थकीकृतनामा किल भीमभूपतिः ।
यमवाप्य विदर्भभूः प्रभुं हसति द्यामपि शक्रभर्तृकाम् ॥ २।१६॥

प्रसङ्गः—नरपतिना नलेन परिदेवनानन्तरं सम्परित्यक्तो राजहंसोऽत्र राजानं प्रति प्रत्युपकर्तुकामः सन् साम्प्रतं स्ववचो वक्तुमुपक्रमते ।

अन्वयः—अरिसार्थसार्थकीकृतनामा स भीमभूपतिः जयति किल । यं प्रभुम् अवाप्य विदर्भभूः शक्रभर्तृकां द्याम् अपि हसति ।

व्याख्या—अरिसार्थसार्थकीकृतनामा=रिपुनिवहाऽन्वर्थीकृताभिधानः, सः =प्रथितः, भीमभूपतिः=भीमाख्यो नरपतिः, जयति किल=सर्वोत्कर्षेण वर्तते खलु । यं=भीमनरपतिं, प्रभुं=भर्तारम्, स्वामिनं वा, अवाप्य= सम्प्राप्य, विदर्भभूः=विदर्भाख्या मही, शक्रभर्तृकाम्=पुरन्दरस्वामिकां, द्याम् अपि=दिवम् अपि, हसति=उपहसति, किमुत अन्यभर्तृकदेशमिति भावः । अस्मिन् श्लोकेऽतिशयोक्तिरर्थापत्तिरलङ्कारयोः संसृष्टिः । वियोगिनी वृत्तम् ।

समासः—अर्थेन सहितं सार्थकम्, असार्थकं सार्थकं यथा सम्पद्यते तथा कृतम्, सार्थकीकृतं नाम यस्य सः, अरीणां सार्थः, तस्मिन् सार्थकीकृतनामा, अरिसार्थसार्थकीकृतनामा । भीमश्चासौ भूपतिः भीमभूपतिः । बिभेति अस्मात् इति भीमः । विदर्भाणां भूः विदर्भभूः । शक्रः भर्ता यस्या सा शक्रभर्तृका, ताम् शक्रभर्तृकाम् ।

( १०६ ) भुवनत्रयसुभ्रुवामसौ दमयन्ती कमनीयतामदम् ।
उदियाय यतस्तनुश्रिया दमयन्तीति ततोऽभिधां दधौ ॥ २।१८॥

प्रसङ्गः—भूपतिना नलेन सन्त्यक्तो हंसोऽत्र नलं प्रति दमयन्त्याः नामधेयं तद्व्युत्पत्तिश्च प्रदर्शयति ।

अन्वयः—असौ यतः तनुश्रिया भुवनत्रयसुभ्रुवां कमनीयतामदं दमयन्ती उदियाय, ततः दमयन्तीति अभिधां दधौ ।

व्याख्या—असौ=भीमात्मजा, यतः=यस्माद्धेतोः, तनुश्रिया=स्वशरीर-सौन्दर्येण, भुवनत्रयसुभ्रुवां=लोकत्रियतसुन्दरीणां, कमनीयतामदं=सौन्दर्याभिमानं, दमयन्ती=अस्तं गमयन्ती सती, उदियाय=उदिता, उत्पन्नेति भावः, ततः=तस्माद्धेतोः, दमयन्ती इति=दमयन्तीत्यानुपूर्विकाम्, अभिधां= आख्यां, दधौ=बभार । लोकत्रितयसुन्दरीणामपेक्षया दमयन्त्याः सौन्दर्याधिक्यवर्णनाद् व्यतिरेकालङ्कारोऽत्र । वियोगिनी वृत्तम् 'विषमे ससजाः गुरुः समे सभरालोऽथगुरुर्वियोगिनी' इति लक्षणात् ।

समासः—तनोः श्रीः, तया तनुश्रिया । त्रयः अवयवाः यस्य तत् त्रयम्,

शोभने भ्रुवौ यासां ताः सुभ्रुवः, भुवनानां त्रयम्, तस्मिन् सुभ्रुवः, तासाम् भुवनत्रयसुभ्रुवाम्। कमनीयस्य भावः कमनीयता, कमनीयतायाः मदः, तम् कमनीयतामदम्।

(१०७) श्रियमेव परं धराऽधिपाद् गुणसिन्धोरुदितामवेहि ताम्।
व्यवधावपि या विधोः कलां मृडचूडानिलयां न वेद कः॥ २।१९॥

**प्रसङ्गः**—नरपतिना नलेन संपरित्यक्तोहंसः भूपतेः प्रियं कर्तुमभीप्सया लोकत्रियसुन्दरीणामग्रेसरां दमयन्तीं समुपवर्णयत्यत्र।

**अन्वयः**—( हे राजन्! ) तां गुणसिन्धोः धराऽधिपात् उदितां श्रियम् एव परम् अवेहि, वा व्यवधौ अपि मृडचूडानिलयां विधोः कलां को न वेद?।

**व्याख्या**—( हे राजन्!=भो नृप! ) तां=पूर्वोक्तां दमयन्तीं, गुणसिन्धोः =दयादाक्षिण्यादिगुणसागरात्, धराऽधिपात्=भीमभूपतेः, उदिताम्=प्रादुर्भूताम्, श्रियम्=लक्ष्मीम्, एव=निश्चयेन, अवेहि=अवगच्छ। वा=अथवा, व्यवधौ अपि=व्यवधाने सत्यपि, मृडचूडानिलयां=शम्भुशिखाऽऽश्रयां, विधोः चन्द्रमसः, कला=षोडशांशं, चन्द्रकलामिति भावः, को न वेद=को नावगच्छति? सर्वेऽपि जानन्त्येवेत्याशयः। अस्मिन् श्लोके परम्परितरूपक-दृष्टान्तालङ्कारयोः संसृष्टिः। वियोगिनी वृत्तम्।

**समासः**—गुणानां=दयादाक्षिण्यादीनां, सिन्धुः, तस्मात् गुणसिन्धोः। धरायाः अधिपः, तस्मात् धराऽधिपात्। व्यवधानं व्यवधिः, तस्मिन् व्यवधौ। मृडस्य चूडा, मृडचूडा निलयो यस्याः सा, ताम् मृडचूडानिलयाम्।

(१०८) चिकुरप्रकुरा जयन्ति ते विदुषी मूर्धनि सा बिभर्ति यान्।
पशुनाऽप्यपुरस्कृतेन तत्तुलना मिच्छतु चामरेण कः॥ २।२०॥

**प्रसङ्गः**—द्रष्टव्यम्, श्लो० १०७।

**अन्वयः**—ते चिकुरप्रकुरा जयन्ति, विदुषी सा यान् मूर्धनि बिभर्ति। पशुना अपि अपुरस्कृतेन चामरेण तत्तुलनां क इच्छतु?।

**व्याख्या**—ते=प्रथिताः, चिकुरप्रकुराः=केशकलापाः, जयन्ति=सर्वोत्कर्षेण विद्यन्ते, विदुषी=पण्डिता, सा=दमयन्ती, यान्=केशकलापान्, मूर्धनि=शिरसि, बिभर्ति=धारयति, पशुना अपि=चतुष्पदेन चमरीमृगेणाऽपि, अपुरस्कृतेन=अनादृतेन, पृष्ठभागस्थितेन वा, चामरेण=चमरीपुच्छेन

साकं, तत्तुलनां=चिकुरप्रकरसमीकरणं, कः=जनः, इच्छतु=वाञ्छतु, न कोऽपीति भावः। चिकुरप्रकराणामुत्कर्षाधिक्यवर्णनाद् व्यतिरेकालङ्कारः, वियोगिनी वृत्तम्।

समासः—चिकुराणां प्रकराः, चिकुरप्रकराः। न पुरस्कृतम् अपुरस्कृतम्, तेन अपुरस्कृतेन। तोलनं तुलना, तेषां तुलना, ताम् तत्तुलनाम्।

(१०९) अपि लोकयुगं दृशावपि श्रुतदृष्टा रमणीगुणा अपि।
श्रुतिगामितया दमस्वसुर्व्यतिभाते सुतरां धरापते!॥ २।२२॥

प्रसङ्गः—द्रष्टव्यम्, श्लो० १०७।

अन्वयः—हे धरापते! दमस्वसुः लोकयुगं श्रुतिगामितया सुतरां व्यतिभाते, दृशौ अपि श्रुतिगामितया सुतरां व्यतिभाते, श्रुतदृष्टा रमणीगुणा अपि श्रुतिगमितया सुतरां व्यतिभाते।

व्याख्या—हे धरापते!=हे महीपते! दमस्वसुः=भैम्याः, लोकयुगं=मातृपितृकुलयुगं, श्रुतिगामितया=वेदप्रथिततया, जगत्प्रसिद्धत्वेन वा, सुतरां=भृशं, व्यतिभाते=परस्परोत्कर्षेण विनिमयेन वा भातः। दृशौ अपि=लोचने अपि, दमयन्त्या इति शेषः, श्रुतिगमितया=कर्णाऽन्तविश्रान्तया, सुतरां=अतिमात्रं, व्यतिभाते=परस्परोत्कर्षेण विनियमेन वा भातः (शोभेते)। श्रुतदृष्टाः=आकर्णिताऽवलोकिताः, लोकतः श्रुता आत्मना विज्ञाताश्चेति भावः, रमणीगुणा अपि=सौन्दर्योदार्यादयो, वनिताधर्माः अपि, श्रुतिगामितया=जनैः श्रूयमाणतया, सुतरां=अत्यर्थं, व्यतिभाते=विनिमयेन भान्ति (शोभन्ते)। भैम्या मातृपितृकुलयुगं लोचनद्वयं स्त्रीगुणा अपि प्रसिद्धिपथागतत्वेन शोभन्त इति भावः। 'श्रुतिगामितया' इत्यस्यानेकार्थत्वात् श्लेषालङ्कारः, 'व्यतिभाते' इत्यत्र वचनश्लेषः, अनेकेषामेकक्रियायामन्वयात् तुल्ययोगितालङ्कारः। एवमत्र श्लेषतुल्ययोगितालङ्कारयोः संसृष्टिः। वियोगिनी वृत्तम्।

समासः—धरायाः पतिः, तत्सम्बुद्धौ हे धरापते!। दमस्य स्वसा, तस्याः दमस्वसुः। लोकयोर्युगं लोकयुगम्। श्रुत्योर्गच्छतीति श्रुतिगामि, श्रुतिगामिनो भावः, तया श्रुतिगामितया। अन्यत्र श्रुत्योर्गच्छतः तच्छीले इति श्रुतिगामिन्यौ, श्रुतिगामिन्योर्भावः श्रुतिगामिता, तया श्रुतिगामितया। प्राक् श्रुता पश्चाद् दृष्टाः इति श्रुतदृष्टाः। रमण्याः गुणाः रमणीगुणाः। श्रुत्योर्गच्छन्तीति श्रुतिगामिन श्रुतिगामिनां भावः, तया श्रुतिगामितया।

(११०) नलिनं मलिनं विवृण्वती पृषतीमस्पृशती तदीक्षणे।
अपि खञ्जनमञ्जनाऽञ्चिते विदधाते रुचिगर्वदुर्विधम् ॥
२।२३ ॥

प्रसङ्गः—द्रष्टव्यम्, श्लो १०७।

अन्वयः—नलिनं मलिनं विवृण्वती, पृषतीम्, अस्पृशती तदीक्षणे अञ्जनाऽञ्चिते ( सती ) खञ्जनम् अपि रुचिगर्वदुर्विधं विदधाते।

व्याख्या—नलिनं=पङ्कजं, मलिनं=अचारु, विवृण्वती=कुर्वाणे, पृषतीम्=मृगीम्, अस्पृशती=लोचनचारुत्वस्पर्धायां दूरात्परिहरती, तदीक्षणे=भैमीलोचने, अञ्जनाऽञ्चिते=कज्जलपरिष्कृते सती, खञ्जनम् अपि=खञ्जरीटं खगमपि, रुचिगर्वदुर्विधम्=चारुत्वाऽभिमाननिःस्वं, ( 'निःस्वस्तु दुर्विधो दीनो दरिद्रो दुर्गतोऽपि सः' इत्यमरः ) विदधाते=कुर्वाते। भैम्या ईक्षणयोर्नलिनादिमलिनीकरणाद्यसम्बन्धे सम्बन्धोक्तेरतिशयोक्तिः, उपमानभूतनलिनाद् उपमेयभूततल्लोचनयोराधिक्यवर्णनाद् व्यतिरेकालङ्कारः। एतावता द्वयोरलङ्कारयोरङ्गाङ्गिभावसत्वात् सङ्करालङ्कारः। वियोगिनीवृत्तम्।

समासः—विवृणुत इति विवृण्वती। स्पृशत इति स्पृशती, न स्पृशती अस्पृशती। तस्या ईक्षणे तदीक्षणे। अञ्जनेन अञ्चिते अञ्जनाऽञ्चिते। रुचेः गर्वः, तस्मिन् दुर्विधः, तम् रुचिगर्वदुर्विधम्।

(१११) हृतसारमिवेन्दुमण्डलं दमयन्तीवदनाय वेधसा।
कृतमध्यबिलं विलोक्यते धृतगम्भीरखनीखनीलिम ॥२।२५॥

प्रसङ्गः—द्रष्टव्यम्, श्लो० १०७।

अन्वयः—इन्दुमण्डलं दमयन्तीवदनाय वेधसा हृतसारम् इव कृतमध्यबिलं धृतगम्भीरखनीखनीलिम विलोक्यते।

व्याख्या—इन्दुमण्डलं=सुधांशुबिम्बं, दमयन्तीवदनाय=भैमीलपनं विनिर्मातुं, वेधसा=प्रजासृजा, हृतसारम्=समुद्धृतमध्यश्रेष्ठभागम्, इव=यथा, कृतमध्यबिलं=विहितान्तररन्ध्रम्, सत्, धृतगम्भीरखनीखनीलिम=निम्नमध्यरन्ध्राकाशनैल्यं, विलोक्यते=संदृश्यते। अस्मिन् श्लोकेऽपह्नुति-काव्यलिङ्गोत्प्रेक्षालङ्काराणामङ्गाङ्गिभावसत्वात् सङ्करालङ्कारः। वियोगिनी वृत्तम्।

समासः—इन्दोः मण्डलं, इन्दुमण्डलम्। दमयन्त्याः वदनं, तस्मै दमयन्तीवदनाय। हृतः सारो यस्मात् तत् हृतसारम्। मध्ये बिलम्, कृतं मध्यबिलं यस्य तत् कृतमध्यबिलम्। गम्भीरा चाऽसौ खनी, नीलस्य भावो नीलिमा

खस्य नीलिमा, गम्भीरखन्यां खनीलिमा, धृतो गम्भीरखनीखनीलिमा -येन तत् धृतगम्भीरखनीखनीलिम् ।

(११२) धनुषी रतिपञ्चबाणयोरुदिते विश्वजयाय तद्भ्रुवा ।
नलिके न तदुच्चनासिके त्वयि नालीकविमुक्तिकामयोः ॥ २।२८ ॥

प्रसङ्गः—द्रष्टव्यम्, श्लो० १०७ ।

अन्वयः—तद्भ्रुवौ विश्वजयाय उदिते रतिपञ्चबाणयोः धनुषी, तदुच्चनासिके त्वयि नालीकविभक्तिकामयोः रतिपञ्चबाणयोः नलिके न ?

व्याख्या—तद्भ्रुवौ = विदर्भजाभ्रुवौ, विश्वजयाय = भुवनविजयाय, उदिते = समुत्पन्ने, रतिपञ्चबाणयोः = रतिकामदेवयोः, धनुषी = चापौ, भ्रुवम् । एवञ्च, तदुच्चनासिके भैम्युन्नतनासापुटे, त्वयि = भवति, नालीकविमुक्तिकामयोः = शरप्रहारार्थिनोः, रतिपञ्चबाणयोः = रतिकामदेवयोः, नालिके-न = द्रोणिचापे न, किमिति काकुः । भैम्या भ्रूनासिकमवलोक्य सर्वोऽपि जनः कामवशो भवतीत्याशयः । अस्मिन् श्लोके रूपकोत्प्रेक्षालङ्कारयोः संसृष्टिः । वियोगिनी वृत्तम् ।

समासः—तस्या भ्रुवौ तद्भ्रुवौ । विश्वस्य जयः, तस्मै विश्वजयाय । पञ्च बाणा यस्य सः, रतिश्च पञ्चबाणश्च रतिपञ्चबाणौ, तयो रतिपञ्चबाणयोः । उच्चे च ते नासिके, तस्या उच्चनासिके तदुच्चनासिके विमुक्तिं कामयेते इति विमुक्तिकामौ, नालीकानां विमुक्तिकामौ, तयोः नालीकविमुक्तिकामयोः ।

(११३) सदृशी तव शूर ! सा परं जलदुर्गस्थमृणालजिद्भुजा ।
अपि मित्रजुषां सरोरुहां गृहयालुः करलीलया श्रियः ॥ २।२९ ॥

प्रसङ्गः—द्रष्टव्यम्, श्लो० १०७ ।

अन्वयः—हे शूर ! जलदुर्गस्थमृणाल-जिद्भुजा मित्रजुषाम् अपि सरोरुहां श्रियः करलीलया गृहयालुः सा तव परं सदृशी ।

व्याख्या—हे शूर ! = भो वीर !, जलदुर्गस्थमृणालजिद्भुजा = उदकदुर्गस्थविसजयिबाहुः, सा = विदर्भजा, मित्रजुषाम् अपि = अर्कसेविनां, सुहृत्सहायसम्पन्नानामपि, सरोरुहां = जलजानां, श्रियः = शोभाः, सम्पदश्च, करलीलया = = भुजविलासेन, बलिग्रहणेन च, ग्रहयालुः = ग्रहणशीलाः, सा = भैमी, तव = भवतः, परम् = अतिमात्रम्, सदृशी = तुल्या । अस्मिन् श्लोके भैमीनलयोः-

साम्यवर्णनात् समालङ्कारः 'समं स्यादानुरुप्येण श्लाघा या योग्यवस्तुनोः।' इति लक्षणात् । वियोगिनी वृत्तम् ।

**समासः**—जलम् एव दुर्गः, तस्मिन् तिष्ठन्तीति जलदुर्गस्थानि, तानि च तानि मृणालानि, तानि जयत इति जलदुर्गस्थमृणालजितौ, तादृशौ भुजौ यस्याः सा जलदुर्गस्थमृणालजिद्भुजा । मित्रं जुषन्त इति मित्रंजूषि, तेषां मित्रजुषाम् । सरसि रोहन्तीति सरोरुहि, तेषां सरोरुहाम् । करयोः अथवा कराणां लीला, तया करलीलया ।

(११४) अपि तद्वपुषी प्रसर्पतोर्गमिते कान्तिझरैरगाधताम् ।
स्मरयौवनयोः खलु द्वयोः प्लवकुम्भौ भवतः कुचावुभौ ॥२।३१॥

**प्रसङ्गः**—द्रष्टव्यम्, श्लो० १०७ ।

**अन्वयः**—कान्तिझरैः अगाधतां गमिते तद्वपुसि प्रसर्पतोः स्मरयौवनयोः द्वयोः अपि उभौ कुचौ प्लवकुम्भौ भवतः खलु ।

**व्याख्या**—विदर्भजायाः पयोधरौ वर्णयति कहाकविरत्र । कान्तिझरैः=लावण्यप्रवाहैः, अगाधतां=दुरवगाहतां, गमिते=प्रापिते सति, तद्वपुषि=विदर्भजाशरीरे, प्रसर्पतोः=प्रसर्पणं कुर्वतोः, स्मरयौवनयोः=मनसिजतारुण्ययोः, द्वयोः अपि=उभयोरपि, उभौ=द्वौ, कुचौ=पयोधरौ, प्लवकुम्भौ=तरणकलशौ, भवतः=वर्तेते, खलु=निश्चयेन । लोके तरद्भिरनिमज्जनाय कुम्भजादिकमवलम्ब्यत इति प्रथितम् । अत्र कुचयोः स्मरयौवनप्लवनकुम्भत्वोत्प्रेक्षया तयोरौत्कट्यं कुचयोश्चातिवृद्धिर्व्यज्यत् इत्यलङ्कारेण वस्तुध्वनिः । वियोगिनीवृत्तम् ।

**समासः**—कान्तीनां झराः, तैः कान्तिझरैः । तस्या वपुः, तस्मिन् तद्वपुषि । प्रसर्पत इति प्रसर्पती, तयोः प्रसर्पतोः । स्मरश्च यौवनं च स्मरयौवने तयोः स्मरयौवनयोः । प्लवस्य कुम्भौ प्लवकुम्भौ ।

(११५) कलसे निजहेतुदण्डजः किमु चक्रभ्रमकारितागुणः ।
स तदुच्चकचौ भवन् प्रभाझरचक्रभ्रममातनोति यत् ।।२।३२।।

**प्रसङ्गः**—द्रष्टव्यम्, श्लो० १०७ ।

**अन्वयः**—निजहेतुदण्डजः चक्रभ्रमकारितागुणः कलसे किमु । यत् स तदुच्चकुचौ भवन् प्रभाझरचक्रभ्रमम् आतनोति ।

**व्याख्या**—निजहेतुदण्डजः=स्वनिमित्तकारणदण्डजन्यः, चक्रभ्रमकारितागुणः=कुलालभाण्डभ्रमणजनकत्वधर्मः, कलसे किमुः=दण्डकार्यरूपे घटे सङ्क्रान्तं

किमु ? यत्=यस्माद्धेतोः, सः=कलसः, तदुच्चकुचौ=विदर्भजासमुन्नतपयोधरौ, भवन्=सन्, प्रभाझरचक्रभ्रमं=लावण्यप्रवाहचक्रवाकभ्रान्ति, कुलालदण्डभ्रमणं च, आतनोति=प्रकरोति। अस्मिन् श्लोके 'तदुच्चकुचौ भवन्' रूपकाङ्लकारः: पूर्वार्द्धे उत्प्रेक्षालङ्कारः, उत्तरार्द्धे प्रतीयमानोत्प्रेक्षालङ्कारः, एवं समेषामलङ्काराणां सत्वात् सङ्करालङ्कारः वियोगिनी वृत्तम्।

**समासः**—निजश्चासौ हेतुः, स चाऽसौ दण्डः, तस्माज्जातः निजहेतुदण्डजः। भ्रमणं भ्रमः, चक्रस्य भ्रमः, चक्रभ्रमं करोतीति तच्छीलः चक्रभ्रमकारिणो भावः चक्रभ्रमकारिता, स एव गुणः, चक्रभ्रमकारितागुणः। उच्चौ च तौ कुचौ, तस्या उच्चकुचौ तदुच्चकुचौ। प्रभाणां झरः, चक्रस्य भ्रमः; प्रभाझरे चक्रभ्रमः, तम् प्रभाझरचक्रभ्रमम्।

(११६) उदरं नतमध्यपृष्ठतास्फुरदङ्गुष्ठपदेन मुष्टिना।
चतुरङ्गुलमध्यनिर्गतत्रिबलिभ्राजि कृतं दमस्वसुः॥ २।३४॥

**प्रसङ्गः**—द्रष्टव्यम्, श्लो १०७।

**अन्वयः**—दमस्वसुः उदरं नतमध्यपृष्ठतास्फुरदङ्गुष्ठपदेन मुष्टिना चतुरङ्गुलमध्यनिर्गतत्रिवलिभ्राजि कृतम्।

**व्याख्या**—दमस्वसुः=विदर्भजायाः, उदरं=जठरं, नतमध्यपृष्ठतास्फुरङ्गुष्ठपदेन=निम्नमध्यप्रदेशपृष्ठभागताव्यक्तीभवद्वृद्धाङ्गुलिन्यासस्थानेन, मुष्टिना=सम्पीडिताङ्गुलिपाणिना, चतुरङ्गुलमध्यनिर्गतत्रिवलिभ्राजि=अङ्गुलिः चतुष्टयाऽऽन्तरालनिःसृतबलित्रयशोभि, कृतं=विहितं, कौतुकान्वितेन प्रजासृजेति शेषः। मुष्टिग्राह्यमध्येयं विदर्भजेति भावः। प्रतीमानोत्प्रेक्षालंकारोऽत्र, वियोगिनी वृत्तम्।

**समासः**—दमस्य स्वसा, तस्याः दमस्वसुः। नतः मध्यः यस्य तत्, नतमध्यं पृष्ठं यस्य (उदरस्य) तत्, तस्य भावः, तत्ता, स्फुरत् अङ्गुष्ठपदं यस्य सः, नतमध्यपृष्ठतया स्फुरदङ्गुष्ठपदः, तेन नतमध्यपृष्ठतास्फुरदङ्गुष्ठपदेन। चतसृणाम् अङ्गुलीनां समाहारः चतुरङ्गुलम् चतुरङ्गुलस्य मध्याः, चतुरङ्गुलमध्येभ्यो निर्गतम्, तिसृणां बलीनां समाहारः त्रिबलि, चतुरङ्गुलमध्यनिर्गतं च तत् त्रिवलि, तेन भ्राजते तच्छीलं चतुरङ्गुलमध्यनिर्गतत्रिबलिभ्राजि।

(११७) उदरं परिमाति मुष्टिना कुतुकी कोऽपि दमस्वसुः किमु ?
धृततच्चतुरङ्गुलीव यद्वलिभिर्भाति सहेमकाञ्चिभिः॥
२।३५॥

**प्रसङ्गः**—द्रष्टव्यम्, श्लो० १०७।

**अन्वयः**—कः अपि कुतुकी दमस्वसुः उदरं मुष्टिना परिमाति किमु ? यत् सहेमकाञ्चिभिः बलिभिः धृततच्चतुरङ्गुलिम् इव भाति।

**व्याख्या**—जठरमेव प्रकारान्तरेण वर्णयति महाकविरत्र—कः अपि= अज्ञातनामा कश्चन् जनः, कुतुकी=कौतुकान्वितः सन्, दमस्वसुः=भैम्याः, उदरं=तुन्दं ('पिचण्डकुक्षी जठरोदरं तुन्दं' इत्यमरः) मुष्टिना=सम्पीडिङ-ताङ्गुलिपाणिना, परिमाति किमु=परिच्छिनत्ति किम् ? यत्=यस्माद्धेतोः, सहेमकाञ्चिभिः=सुवर्णमेखलायुताभिः, बलिभिः=तिसृभिः उदररेखाभिः, धृत-तच्चतुरङ्गुलि=धृतपरिमात्रङ्गुलीचतुष्टयम्, इव=यथा, भाति=शोभते। अस्मिन् श्लोके उत्प्रेक्षाद्वयोः सङ्करः, वियोगिनी वृत्तम्।

**समासः**—कुतुकम् अस्याऽस्तीति कुतुकी। हेम्नः काञ्चिः, तया सहिताः सहेमकाञ्चयः, ताभिः सहेमकाञ्चिभिः। चतुः संख्यकाः अङ्गुल्यः चतुरङ्गुल्यः, तस्य (परिमातुः) चतुरङ्गुल्यः, धृताः तच्चतुरङ्गुल्यो येन तत् धृततच्चतु-रङ्गुलिः।

(११८) पृथुवर्तुलतन्नितम्बकृन्मिहिरस्यन्दनशिल्पशिक्षया।
विधिरेककचक्रचारिणं किमु निर्मित्सति मान्मथं रथम् ? ॥ ११३६॥

**प्रसङ्गः**—द्रष्टव्यम्, श्लो० १०७।

**अन्वयः**—पृथुवर्तुलतन्नितम्बकृत् विधिः मिहिरस्यन्दनशिल्पशिक्षया एक-कचक्रचारिणं मान्मथं रथं निर्मित्सति किमु ?

**व्याख्या**—पृथुवर्तुलतन्नितम्बकृत्=बृहद्वृत्तविदर्भजाकटिपश्चाद्भागनिर्माता, विधिः=विधाता, मिहिरस्यन्दनशिल्पशिक्षया=सूर्यस्यन्दननिर्माणाऽभ्यासपाट-वेन, एककचक्रचारिणम्=एकाकिरथाऽङ्गचरणशीलं, मान्मथं=कामदेवसम्ब-न्धिनं, रथं=स्यन्दनं, निर्मित्सति किमु=निर्मातुमभिलषति किम् ? विधाता रवेरिव मनसिजस्याऽपि एकचक्रं रथं विनिर्मातुं वाञ्छति किम् ? इत्याशयः। उत्प्रेक्षालङ्कारोऽत्र, वियोगिनी वृत्तम्।

**समासः**—पृथुश्चासौ वर्तुलः, तस्या नितम्बः, पृथुवर्तुलश्चासौ तन्नितम्बः, तं करोतीति पृथुवर्तुलतन्नितम्बकृत्। मिहिरस्य स्यन्दनः, तस्य शिल्पं, तस्य शिक्षा, तया मिहिरस्यन्दनशिल्पशिक्षया। एकम् एव एककम्, एककं च तद्

चक्रं, तेन चरतीति तच्छीलः, तम् एककचक्रचारिणम्। मन्मथस्य अयं मान्मथः, तम् मान्मथम्।

(११९) जलजे रविसेवयेव ये पदमेतत्पदतामवापतुः।
ध्रुवमेत्य रुतः सहंसकीकुरुतस्ते विधिपत्त्रदम्पती ॥
२।३८॥

प्रसङ्गः—द्रष्टव्यम्, श्लो० १०७।

अन्वयः—ये जलजे रविसेवया इव एतत्पदतां पदम् अवापतुः, ते विधिपत्त्रदम्पती एत्य रुतः सहंसकीकुरुतः ध्रुवम्।

व्याख्या—भैमीचरणौ वर्णयति महाकविरत्र—ये जलजे=द्वे कमले, रविसेवया=आदित्योपासनया, इव=यथा, एतत्पदतां=विदर्भजाचरणताम् एव, पदं=स्थानं, प्रतिष्ठामित्याशयः, अवापतुः=प्रापतुः, ते=द्वे पद्मे, विधिपत्त्रदम्पती=विधातायानभूतौ हंसीहंसौ, एत्य=आगत्य, रुतः=रवात्, कूजनादित्याशयः, अथवा रुतः=कूजतः, सहंसकीकुरुतः=पादकटकयुते हंसान्विते च कुरुतः, ध्रुवम्=निश्चयेन इवेत्युत्प्रेक्षा। अस्मिन् श्लोके उत्प्रेक्षा-अतिशयोक्तिरलङ्कारौ च वर्तेते, एतावता द्वयोः निरपेक्षतया स्थितिः सत्वात् संसृष्टिरलङ्कारः। वियोगिनी वृत्तम्।

समासः—जले जाते जलजे। रवेः सेवा, तया रविसेवया। पदयोर्भावः पदता, एतस्याः पदता, ताम् एतत्पदताम्। विधेः पत्त्रं, जाया च पतिश्च दम्पती, विधिपत्त्रे च ते दम्पती, विधिपत्त्रदम्पती। रवणं रुत्, तस्याः रुतः। हंसौ इव हंसके, हंसकाभ्याम् (पादकटकाभ्याम्) सहिते सहंसके, असहंसके सहंसके यथा सम्पद्येते तथा कुरुतः सहंसकीकुरुतः। अथवा हंसाभ्यां सहिते सहंसके।

(१२०) श्रितपुण्यसरःसरित् कथं न समाधिक्षपिताऽखिलक्षपम्।
जलजं गतिमेतु मञ्जुलां दमयन्तीपदनाम्नि जन्मनि ॥
२। ३९॥

प्रसङ्गः—द्रष्टव्यम्, श्लो० १०७।

अन्वयः—श्रितपुण्यसरःसरित् समाधिक्षपिताऽखिलक्षपं जलजं दमयन्तीपदनाम्नि जन्मनि मञ्जुलां गतिं कथं न एतु ?

व्याख्या—श्रितपुण्यसरःसरित्=सेवितशुचिकासारनदीकं, समाधिक्षपिताऽखिलक्षपं=ध्यानयापिताशेषशर्वरीकं, जलजं=पद्मं, दमयन्तीपदनाम्नि=

विदर्भजाचरणनामधेये, जन्मनि=जनने, मञ्जुलां=रुचिरां, गतिम्=अवस्थां, कथं=केन प्रकारेण, न एतु=न प्राप्नोतु, एत्वेवेत्याशयः। अस्मिन् श्लोके समासोक्तिरर्थापत्तिरलङ्कारयोरङ्गाङ्गिभावसत्वात् सङ्करालङ्कारः। वियोगिनी-वृत्तम्।

**समासः**—सरांसि च सरितश्च सरःसरितः, श्रिताः पुण्याः सरःसरितो येन तत् श्रितपुण्यसरःसरित्। समाधिना (ध्यानेन मुकुलीभावेन वा) क्षपिताः, अखिलाश्च ताः क्षपाः, समाधिक्षपिता अखिलाः क्षपाः येन तत् समाधिक्षपिता-ऽखिलक्षपम्। जले जातं जलजम्। दमयन्त्याः पदं, तत् नाम यस्य तत् तस्मिन् दमयन्तीपदनाम्नि।

(१२१) सरसीः परिशीलितुं मया गमिकर्मीकृतनैकनीवृता।
अतिथित्वमनायि सा दृशोः सदसत्संशयगोचरोदरी॥
२।४०॥

**प्रसङ्गः**—हिरण्मयो हंसः 'एतादृश्यनन्यतमा रमणीया दमयन्ती त्वया कथमवलोकिता' इत्याशङ्कां निराकरोत्यत्र।

**अन्वयः**—सरसीः परिशीलितुं गमिकर्मीकृतनैकनीवृता मया सदसत्संशय-गोचरोदरी सा दृशोः अतिथित्वम् अनायि।

**व्याख्या**—सरसीः=सरांसि, परिशीलितुं=परिचेतुं, तत्र विहर्तुमिति भावः; गमिकर्मीकृतनैकनीवृता=गमनफलाश्रयीकृतऽनेकजनपदेन, ('नीवृज्जनपदः' इत्यमरः), मया=हंसेन, सदसत्संशयगोचरोदरी=भावाऽभावसन्देहास्पदोदरी, कृशोदरीत्याशयः, सा=तादृशी दमयन्ती, दृशोः=लोचनयोः, अतिथित्वं=प्राघुणिकत्वं, ग्राह्यत्वम्, अनायि=प्रापिता, सन्दृष्टा—इति भावः। अतिशयो-क्तिरलङ्कारोऽत्र, वियोगिनी वृत्तम्।

**समासः**—गमेः कर्म गमिकर्म, अगमिकर्म गमिकर्म यथा सम्पद्यते तथा कृताः गमिकर्मीकृताः, नितरां वर्तन्ते जना येषु ते नीवृतः, गमिकर्मीकृताः नैके नीवृतो येन सः, तेन गमिकर्मीकृतनैकनीवृता। सच्च असच्च सदसत्, सदसति संशयः, तस्य गोचरः, सदसत्संशयगोचरः उदरं यस्याः सा सदसत्संशयगोचरोदरी।

(१२२) अनुरूपमिमं निरूपयन्नथ सर्वेष्वपि पूर्वपक्षताम्।
युवसु व्यपनेतुमक्षमस्त्वयि सिद्धान्तधियं न्यवेशयम्॥
२।४२॥

प्रसङ्गः—'अन्यान् यूनो दमयन्त्या अयोग्यान् विचार्य भवानेव तस्या अनुरूपः पति'रिति हंसेन विहितं विनिर्णयं वर्णयति महाकविरत्र।

अन्वयः—अथ अनुरूपम् इमं निरूपयन् सर्वेषु अपि युवसु पूर्वपक्षतां व्यपनेतुम् अक्षमः ( सन् ) त्वयि सिद्धान्तधियं न्यवेशयम्।

व्याख्या—अथ = चिन्ताऽनन्तरम्, अनुरूपम् = योग्यं, विदर्भजाया इति शेषः, इमं = पतिं, निरूपयन् = आलोचयन्, सर्वेषु अपि = समस्तेष्वपि, युवसु = युवकेषु, पूर्वपक्षतां = दूष्यकोटितां, व्यपनेतुं = विनिवारयितुं, अक्षमः = अशक्तः सन्, त्वयि = भवति विषये, सिद्धान्तधियं = सिद्धान्तबुद्धिं, न्यवेशयम् = निवेशितवान्। अस्मिन् श्लोके समालङ्कारः, 'समं स्यादानुरूप्येण श्लाघा या योग्यवस्तुनोः' इति लक्षणात्। वियोगिनी वृत्तम्।

समासः—रूपस्य योग्यम्, अनुरूपम्। पूर्वश्चासौ पक्षः, तस्य भावस्तत्ता, ताम् पूर्वपक्षताम्। सिद्धान्तस्य धीः, ताम् सिद्धान्तधियम्।

( १२३ ) अनया तव रूपसीमया कृतसंस्कार विवोधमस्य मे।
चिरमप्यवलोकिताऽद्य सा स्मृतिमारूढवती शुचिस्मिता ॥
२। ४३ ॥

प्रसङ्गः—'चिरकालपूर्वमवलोकिता अपि सा शुभ्रहास्यान्वितानन्यसुन्दरी दमयन्ती तव सौन्दर्यसुषमया समुद्बुद्धभावनाख्यसंस्कारस्य मम स्मृतिपथं पुनरारूढा' इति प्रोच्य हिरण्मयहंसो राजानं नलं प्रति तस्य सातिशयं सौन्दर्यमत्र वर्णयति।

अन्वयः—चिरम् अवलोकिता अपि सा शुचिस्मिता अद्य अनया तव रूपसीमया कृतसंस्कारविवोधनस्य मे स्मृतिम् आरूढवती।

व्याख्या—चिरम् = बहुकालपूर्वम्, अवलोकिता अपि = दृष्टा अपि, सा = पूर्वनिगदिता, शुचिस्मिता = धवलहास्या, अनिन्द्यसुन्दरी दमयन्तीति भावः, अद्य = अस्मिन् दिने, अनया = सन्निकृष्टस्थया, तव = भवतः, रूपसीमया = सौन्दर्यकाष्ठया, कृतसंस्कारविबोधनस्य = उद्बुद्धसंस्कारस्य, मे = मम, हंसस्य, स्मृतिम् = स्मरणपथम्, आरूढवती = आरूढा। स्मरणालङ्कारोऽत्र, 'सदृशाऽनुभवाद्वस्तुस्मृतिः स्मरणमुच्यते' इति लक्षणात्। वियोगिनी वृत्तम्।

समासः—शुचि स्मितं यस्याः सा शुचिस्मिता। रूपस्य सीमा, तया रूपसीमया। संस्कारस्य विबोधनं, कृतं संस्कारविबोधनं यस्य सः, तस्य कृतसंस्कार विबोधनस्य।

(१२४) त्वयि वीर ! विराजते परं दमयन्ती किलकिञ्चितं किल।
तरुणीस्तन एव दीप्यते मणिहारावलिरामणीयकम् ॥
२।४४॥

प्रसङ्गः—'विदर्भजायाः शृङ्गारचेष्टाविशेषो भवति एव राजते' इति निगद्य हिरण्मयहंसोऽत्र राज्ञः नलस्य कृते दमयन्त्याः समुपयोगित्वं वर्णयति।

अन्वयः—हे वीर ! दमयन्तीकिलकिञ्चितं त्वयि परं विराजते किल। मणिहारावलिरामणीयकं तरुणीस्तन एव दीप्यते।

व्याख्या—हे वीर !=भो शूर ! दमयन्तीकिलकिञ्चितं=भैमीशृङ्गारचेष्टितं, ('स्मितशुष्करुदितहसितत्रासक्रोधश्रमादीनाम्। साङ्कर्यं किलकिञ्चितमभीष्टतमसङ्गमादिजाद्धर्षात्'। सा. द. ३।१०१) त्वयि = भवति, परम् = एव, विराजते = शोभते, किल = निश्चयेन। मणिहारावलिरामणीयकं = मुक्ताहारपङ्क्तिरमणीयत्वं, तरुणीस्तन एव = सीमन्तिनीपयोधर एव, दीप्यते = राजते; नान्यत्रेति भावः। बिम्बप्रतिबिम्बतया स्तनचृपयोः समानधर्मत्वोक्तेर्दृष्टान्तलङ्कारोऽत्र 'दृष्टान्तस्तु सधर्मस्य वस्तुनः प्रतिबिम्बनम्' इति लक्षणात्। वियोगिनी वृत्तम् 'विषमे ससजा गुरुः समे, सभरालोऽथ गुरुर्वियोगिनी' इति लक्षणात्।

समासः—वीरयतीति वीरः, तत्सम्बुद्धौ हे वीर ! दमयन्त्याः किलकिञ्चितम्, दमयन्तीकिलकिञ्चितम्। हाराणाम् आवलिः, मणिखचिता हारावलिः, रमणीयस्य भावः, इति मणिहारावलिरामणीयकम्। तरुण्याः स्तनः, तस्मिन् तरुणीस्तने।

(१२५) तव रूपमिदं तया विना विफलं पुष्पमिवाऽवकेशिनः।
इयमृद्धधना वृथाऽवनी स्ववनी सम्प्रवदत्पिकाऽपि का ? ॥
२।४५॥

प्रसङ्गः—भैमीमन्तरेण राज्ञो नलस्य रूपसम्पत्तेः वैयर्थ्यं दृष्टान्तोपन्यासपुरस्सरं चारुतया समुपवर्णयति हिरण्मयहंसोऽत्र।

अन्वयः—(हे वीर !) तव इदं रूपं तया बिना अवकेशिनः पुष्पम् इव विफलम्। ऋद्धधना इयम् अवनी वृथा, सम्प्रवदत्पिका स्ववनी अपि का ?

व्याख्या—(हे वीर !=भो शूर !) तव=भवतः, इदं=दृश्यमानं, रूपं=सौन्दर्यं, निरुपमेयमिति शेषः, तया विना=दमयन्त्या विना, अवकेशिनः=बन्ध्यवृक्षस्य, पुष्पं=प्रसूनं, इव=यथा, विफलं=निरर्थकम्। ऋद्धधना=प्रचुरवित्तान्विता, इयं=दृश्यमाना, अवनी=महीः, वृथा=निष्फला, तया

विनेति शेषः, तथैव, सम्प्रवदत्पिका=कूजत्कोकिला, स्ववनी अपि=निजोद्यानमपि, का=क्षुद्रप्राया, निरर्थिकेति भावः, दमयन्त्या विनेति शेषः। अस्य श्लोकस्य पूर्वार्द्धे पूर्णोपमालङ्कारः, उत्तरार्द्धे तु विनोक्तिरलङ्कारः 'विनोक्तिर्यद्विनाऽन्येन नाऽसाध्वन्यदसाधु वा' इति लक्षणात्। एवमुभयोरलङ्कारयोः संसृष्टिः। वियोगिनी वृत्तम्।

समासः—विगतं फलं यस्मात् तत् विफलम्। ऋद्धं धनं यस्यां सा ऋद्धधना। सम्प्रवदन्तः पिका यस्यां सा सम्प्रवदत्पिका। अल्पं वनं वनी, स्वस्य वनी स्ववनी।

(१२६) तव सम्मतिमत्र केवलामधिगन्तुं धिगिदं निवेदितम्।
ब्रुवते हि फलेन साधवो न तु कण्ठेन निजोपयोगिताम्॥
२।४८॥

प्रसङ्गः—भवतः सम्मतिमवगमायैव मदीयं कथनमस्तीति प्रोच्य 'यथा ते रोचते, तथैव क्रियताम्, किं निवेदनेने'त्याशङ्कां निराकरोति हिरण्मयो हंसोऽत्र।

अन्वयः—अत्र केवलां तव सम्मतिम् अधिगन्तुम् इदं निवेदितं धिक्। हि साधवो निजोपयोगितां फलेन ब्रुवते, न तु कण्ठेन (ब्रुवते)।

व्याख्या—अत्र=अस्मिन् कार्ये, केवलाम्=एकां, तव=भवतो नलस्य, सम्मतिम्=अङ्गीकारम्, अधिगन्तुं=विज्ञातुं, इदं=पुरःप्रतिपाद्यमानं, निवेदितं=निवेदनं, धिक्=निवेदितस्य निन्देत्याशयः। हि=यतो हि, साधवः=सत्पुरुषाः, निजोपयोगितां=स्वोपकारित्वं, फलेन=कार्येण, ब्रुवते=बोधयन्ति, न तु कण्ठेन=न तु वाग्व्यापारेण, (ब्रुवते=बोधयन्ति) निजोपयोगितामिति शेषः। सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासालङ्कारोऽत्र, वियोगिनी वृत्तम् 'विषमे ससजाः गुरु समे सभरा लोऽथ गुरुर्वियोगिनी' इति लक्षणात्।

समासः—अस्मिन्निति अत्र। निजस्य उपयोगिता, ताम् निजोपयोगिताम्।

(१२७) न तुलाविषये तवाकृतिर्न वचोवर्त्मनि ते सुशीलता।
त्वदुदाहरणाकृतौ गुणा इति सामुद्रिकसारमुद्रणा॥
२।५१॥

प्रसङ्गः—पतगकुलविभूषणेन हंसेन भैमीपरिचयपुरस्सरं तया साकं परिणयप्रस्तावं समुपस्थापिते सति नरपतिः नलस्तद्वचनं सबहुमानं मन्वानः सन् हंसस्य भूरिशः प्रशंसां कुरुतेऽत्र।

**अन्वयः**—( हे हंस ! ) तव आकृतिः तुलाविषये न, ते सुशीलता वचोवर्त्मनि न। ( अत एव ) आकृतौ गुणा इति सामुद्रिकसारमुद्रणा त्वदुदाहरणा।

**व्याख्या**—( भो हंस ! ) तव=भवतः, आकृतिः=आकारः, तुलाविषये=सादृश्यभूमौ, न=नहि, वर्तत इति शेषः, ते=तव, सुशीलता=सच्चरित्रता, वचोवर्त्मनि=वाक्याध्वनि, न=नैव, विद्यत इति शेषः, ( अतएव ) आकृतौ=आकारे, गुणाः=दयादाक्षिण्यादयः, इति=एवंभूता, सामुद्रिकसारमुद्रणा=सामुद्रिकशास्त्रकारसिद्धान्तप्रतिपादनं, त्वदुदाहरणा=भवद्दृष्टान्तभूता, वर्तत इति शेषः। 'यत्राकृतिस्तत्र गुणा वसन्ति' इति सामुद्रिकशास्त्रकारोक्तेरुदाहरणस्थानीयो भवानेवेत्याशयः। अस्मिन् श्लोके 'आकृतेः तुलाविषये' 'सुशीलतायाः वचोवर्त्मनि'। इत्युभयत्र सम्वन्धसत्वादप्यसम्बन्धोक्तेरतिशयोक्तिः, एवञ्चोत्तरवाक्यार्थस्य पूर्ववाक्यार्थहेतुकत्वात् काव्यलिङ्गमलङ्कारः। इत्थमुभयोरलङ्कारयोर्निपेक्षतया स्थितिःसत्वात् संसृष्टिः। वियोगिनी वृत्तम्।

**समासः**—तोलनं तुला, तुलायाः विषयः, तस्मिन् तुलाविषये। शोभनं शीलं यस्य सः, तस्य भावः तत्ता, सुशीलता। वचसो वर्त्म, तस्मिन् वचोवर्त्मनि। समुद्रेण प्रोक्तं सामुद्रिकम्, सामुद्रिकस्य सारः, तस्य मुद्रणा, इति सामुद्रिकसारमुद्रणा। त्वम् एव उदाहरणं यस्याः सा त्वदुदाहरणा।

( १२८ ) न सुवर्णमयी तनुः परं ननु किं वागपि तावकी तथा।
न परं पथि पक्षपातिताऽनवलम्बे किमु मादृशेऽपि सा॥
२।५२॥

**प्रसङ्गः**—द्रष्टव्यम्, श्लो० १२७।

**अन्वयः**—ननु तावकी तनुः परं सुवर्णमयी न, किं ( तु ) वाक् अपि तथा ( सुवर्णमयी ), तथा अनवलम्बे पथि परं पक्षपातिता न, (अनवलम्बे) मादृशे अपि सा पक्षपातिता न किमु ? ( विद्यत एव )।

**व्याख्या**—ननु ! भो हंस ! तावकी=त्वदीया, तनुः=मूर्तिः, परम्=एव, सुवर्णमयी=हाटकमयी, न=नहि, ( वर्तत इति शेषः ) किं ( तु ) तावकी=भवदीया, वाक् अपि=वाणी अपि, तथा=तेनैव प्रकारेण ( सुवर्णमयी=शोभनाऽक्षरयुता, विद्यत इति शेषः )। तथा अनवलम्बे=आश्रयविरहिते, पथि=अध्वनि, आकाश इति भावः, परम्=एव, पक्षपातिता=पक्षपतनशीलता, न=नहि, अपितु, ( अनवलम्बे=आधारविरहिते ) मादृशे अपि=मत्सदृशे अपि, सा=पूर्वोक्ता, पक्षपातिता=पक्षवर्तिता, न किमु=नाऽस्ति

किम्? विद्यत एवेति भावः। अस्मिन् श्लोके 'सुवर्णमयी' 'पक्षपातिता' इत्युभयत्र पदश्लेषसत्वात् संसृष्टिरलङ्कारः। वियोगिनी वृत्तम्।

समासः—सुवर्णस्य विकारः, (स्त्रीत्वविवक्षायां ङीप्) सुवर्णमयी। पक्षान्तरे—शोभना वर्णाः सुवर्णाः, प्रचुराः सुवर्णा यस्यां सा सुवर्णमयी। अविद्यमानः अवलम्बः (आधारः) यस्य सः तस्मिन् अनवलम्बे। पक्षाभ्यां पततीति तच्छीलः पक्षपाती, पक्षपातिनो भावः, पक्षपातिता। पक्षान्तरे—पक्षे पततीति तच्छीलः पक्षपाती तस्य भावः पक्षपातिता।

(१२९) भृशतापभृता मया भवान् मरुदासादि तुषारसारवान्।
धनिनामितरः सतां पुनर्गुणवत्सन्निधिरेव सन्निधिः॥
२।५३॥

प्रसङ्गः—द्रष्टव्यम्, श्लो० १२७।

अन्वयः—(हे हंस!) भृशतापभृता मया भवान् तुषारसारवान् मरुत् आसादि। धनिनाम् इतरः सन्निधिः पुनः सतां गुणवत्सन्निधिः एव सन्निधिः।

व्याख्या—(हे हंस!) भृशतापभृता=अतिसन्तापभाजा, मया=नलेन, भवान्=त्वं (हंसः), तुषारसारवान्=हिमश्रेष्ठांशान्वितः, मरुत्=पवनः, आसादि=सम्प्राप्तः, सन्तापहरत्वादित्याशयः। (तथा हि) धनिनाम्=आढ्यजनानां, कुबेरादीनामित्याशयः, इतरः=अन्यः, पद्मशङ्खादिः, सन्निधिः=उत्तमशेवधिः, पुनः=भूयः, सतां=विदुषां, गुणवत्सन्निधिः एव=गुणिजनसामीप्यम् एव, सन्निधिः=महानिधिः। सन्तापहारित्वात् भवानेव शिशिरमारुतः, अन्यस्तु दहनप्राय एवेत्याशयः। दृष्टान्तालङ्कारोऽत्र, वियोगिनी वृत्तम्।

समासः—तापं बिभर्तीति तापभृत्, भृशं तापभृत्, तेन भृशतापभृता। तुषाराणां साराः, ते सन्ति यस्य सः, तुषारसारवान्। सच्चाऽसौ निधिः, सन्निधिः। सन्तीति सन्तः, तेषां सताम्। गुणाः सन्ति येषां ते गुणवन्तः, गुणवतां सन्निधिः, गुणवत्सन्निधिः।

(१३०) अखिलं विदुषामनाविलं सुहृदा च स्वहृदा च पश्यताम्।
सविधेऽपि न सूक्ष्मसाक्षिणी वदनाऽलङ्कृतिमात्रमक्षिणी॥
२।५५॥

प्रसङ्गः—नरपतिः नलो हंसं प्रत्यत्र स्वदृष्टेरासदृष्टेर्गरीयस्त्वं पेशलतया स्तौति।

**अन्वयः**—सुहृदा स्वहृदा च अखिलम् अनाविलं पश्यतां विदुषां सविधे अपि न सूक्ष्मसाक्षिणी, अक्षिणी वदनाऽलङ्कृतिमात्रम् ।

**व्याख्या**—सुहृदा=मित्रेण, आप्तमुखेन वा, स्वहृदा=स्वान्तःकरणेन च, अखिलं=कृत्स्नं पदार्थं, अनाविलं=असन्दिग्धं यथा तथा, पश्यतां=विलोकयतां, जानतामित्याशयः, विदुषां=विवेकिनां, सविधे अपि=समीपे अपि, न सूक्ष्मसाक्षिणी=असूक्ष्मार्थदर्शिनी, अक्षिणी=लोचने, वदनाऽलङ्कृतिमात्रं=आननाऽलङ्कारमात्रं, न तु दूरसूक्ष्मपदार्थदर्शनोपयोगिनीत्याशयः। अस्मिन् श्लोके नयनयोः वदनाऽलङ्कृतिमात्रत्वस्य सम्बन्धासत्वादपि सम्बन्धोक्तेरतिशयोक्तिरलङ्कारः। वियोगिनी वृत्तम् ।

**समासः**—शोभनं हृदयं यस्य स सुहृत् तेन सुहृदा। स्वस्य हृत् स्वहृत्, तेन स्वहृदा। न आविलं तद्यथा तथा, अनाविलम्। साक्षात् दृष्टृणी साक्षिणी, सूक्ष्माणां साक्षिणी, न सूक्ष्मसाक्षिणी। वदनस्य अलङ्कृतिः, सा एव, वदनाऽलङ्कृतिमात्रम् ।

(१३१) अमितं मधु तत्कथा मम श्रवणप्राघुणिकीकृता जनैः।
मदनाऽनलबोधनेऽभवत्खग! धाय्या धिगधैर्यधारिणः ॥
२।५६॥

**प्रसङ्गः**—दमयन्त्या साकं परिणयप्रस्तावं हंसेन समुपस्थापिते सत्यनन्तरं नरपतिः नलस्तं प्रति भैमी वियोगजनितां स्वकीयामवस्थां पेशलतया निरूपयत्यत्र ।

**अन्वयः**—हे खग! जनैः मम श्रवणप्राघुणिकीकृता अमितं मधु तत्कथा अधैर्यधारिणी मम मदनाऽनलबोधने धाय्या अभवत्, धिक् ।

**व्याख्या**—हे खग!=भो हंस! जनैः=लोकैः, मम=नलस्य, श्रवणप्राघुणिकीकृता=श्रवणाऽतिथीकृता, अमितं=अपरिमितं, मधु=क्षौद्रं, तद्वदतिमधुरेत्याशयः, तत्कथा=भैमीगुणवर्णना, अधैर्यधारिणः=अतीवाऽधीरस्य, मम=नलस्य, मदनानलबोधने=मन्मथाऽग्निप्रज्वलने, धाय्या=सामिधेनी. अग्निसमिन्धनसमर्था ऋगित्याशयः, अभवत्=अभूत्, धिक्=गर्हायाम्, निन्दा अधैर्यधारिणमिति शेषः। अत्र भैमीकथायाः धाय्यात्मना प्रकृतमदनाग्नीन्धनोपयोगात् परिणामालङ्कारः, 'आरोप्यमाणस्य प्रकृतोपयोगित्वे परिणाम' इत्यलङ्कारसर्वस्वकारलक्षणात्। वियोगिनी वृत्तम् ।

**समासः**—अप्राघुणिका प्राघुणिका यथा सम्पद्यते तथा कृता प्राघुणिकीकृता,

श्रवणयोः प्राघुणिकीकृता श्रवणप्रघुणिकीकृता। न मितम्, अमितम्। तस्याः कथा तत्कथा। धैर्यं धारयतीति तच्छीलः धैर्यधारी, न धैर्यधारी, तस्य अधैर्य-धारिणः। मदन एव अनलः, तस्य बोधनं, तस्मिन् मदनाऽनलबोधने। धीयते अनया समित इति धाय्या ( ऋक् )।

( १३२ ) विषमो मलयाऽहिमण्डली विषफूत्कारमयो मयोहितः।
बत ! कालकलत्रदिग्भवः पवनस्तद्विरहाऽनलैधसा॥
२। ५७॥

प्रसङ्गः—द्रष्टव्यम्, श्लो० १३१।

अन्वयः— विषमः कालकलत्रदिग्भवः पवनः तद्विरहाऽनलैधसा मया मलया-ऽहिमण्डलीविषफूत्कारमय ऊहितः बत !।

व्याख्या— विषमः=प्रतिकूलः, कालकलत्रदिग्भवः=यमदिग्भवः, प्राणहर-इति भावः, पवनः=दक्षिणमारुतः, तद्विरहानलैधसा=विदर्भजावियोगाऽग्नि-काष्ठरूपेण, मया=नलेन, मलयाऽहिमण्डलीविषफूत्कारमयः=मलयाचलसर्प-स्तोमगरलफूत्कारस्वरूपः, अहितः=सन्तर्कितः, बत=इति खेदे। अस्मिन् श्लोके विरहानलैधसेतिरूपकोत्थापितेयं दक्षिणवायोः मलयाहिमण्डलीफूत्कार-त्वोत्प्रेक्षेति सङ्करः। वियोगिनी वृत्तम्।

समासः—कालस्य कलत्रं, कालकलत्रं चाऽसौ दिक्, तस्यां भवः, काल-कलत्रदिग्भवः। तस्या विरहः, स एव अनलः, तस्य एधः, तेन तद्विरहानलैधसा। अहीनां मण्डली, मलये अहिमण्डली, तस्या विषं, प्रचुरः फूत्कार अस्ति यस्मिन् स फूत्कारमयः, मलयाऽहिमलण्डलीविषस्य फूत्कारमयः मलयाऽहिमण्डलीविष-फूत्कारमयः।

( १३३ ) कुसुमानि यदि स्मरेषवो न तु वज्रं, विषवल्लिजानि तत्।
हृदयं यदमूमुहन्नमूर्मम यच्चातितमामतीतपन्॥
२। ५९॥

प्रसङ्गः—द्रष्टव्यम्, श्लो० १३१।

अन्वयः—स्मरेषवः कुसुमानि यदि, न तु वज्रं, तत् विषवल्लिजानि। यत् अमूः मम हृदयम् अमूमुहन्, यत् च अतितमाम् अतीतपन्।

व्याख्या—स्मरेषवः=मनसिजशराः, कुसुमानि यदि=प्रसूनानि चेत्, न तु वज्रं=न तु अशनिः, सद्यो मरणाभावादिति भावः, तत्=तर्हि, विषवल्लि-जानि=गरललतोत्पन्नानि, यत्=यस्माद्धेतोः, अमूः=कामशराः, मम=

नलस्य, हृदयं=मानसं, अमूमुहन्=अमूर्च्छयन्, यत्=यस्मात्, अतितमाम्=भृशम्, अतीतपन्=तापयन्तिस्म। अस्मिन् श्लोके स्मरेषु विषवल्लिजत्वसम्भावनयोत्प्रेक्षालङ्कारः। वियोगिनी वृत्तम्।

समासः—स्मरस्य इषवः स्मरेषवः। विषस्य वल्लयः विषवल्लयः विषवल्लिभ्यो जातानि, विषवल्लिजानि।

(१३४) तदिहाऽनवधौ निमज्जतो मम कन्दर्पशराऽऽधिनीरधौ।
भव पोत इवाऽवलम्बनं विधिनाऽऽकस्मिकसृष्टसन्निधिः॥
२।६०॥

प्रसङ्गः—'भो हंस! विदर्भजासंयोजनेन भैमीविरहतापमपसार्य त्वं मम स्मरशरमनोव्यथासमुद्रोत्तरणहेतुर्भव' इति प्रोच्य नरपतिः नलः हंसं प्रति दमयन्तीविरहजन्यतापमत्राभिव्यनक्ति।

अन्वयः—तत् इह अनवधौ कन्दर्पशराऽऽधिनीरधौ निमज्जतो मम विधिना आकस्मिकसृष्टसन्निधिः (सन्) पोत इव अवलम्बनं भव।

व्याख्या—तत्=तस्माद्धेतोः, इह=अस्मिन्, अनवधौ=अवधिविरहिते, अपारे इति भावः, कन्दर्पशराऽऽधिनीरधौ=मनसिजेषुमनोव्यथासागरे, निमज्जतः=अन्तर्गतस्य, मम=नलस्य, विधिना=भागधेयेन, आकस्मिकसृष्टसन्निधिः=अकस्मादुत्पादितसामीप्यः, मत्सौभाग्यादागत इत्याशयः, (त्वं) पोत=यानपात्रम्, इव=यथा, अवलम्बनं=आलम्बनं, भव=एधि। अस्मिन् श्लोके पूर्वार्द्धे रूपकालङ्कारः, उत्तरार्द्धे उपमालङ्कारः, इत्थमुभयोरलङ्कारयोर्निरपेक्षतया स्थितिसत्वात् संसृष्टिरङ्कारः। वियोगिनी वृत्तम्।

समासः—अविद्यमानः अवधिर्यस्य सः, तस्मिन् अनवधौ। कन्दर्पस्य शराः, तैः आधिः, कन्दर्पशराऽऽधिः एव नीरधिः, तस्मिन् कन्दर्पशराऽऽधिनीरधौ। अकस्मात् भवम् आकस्मिकम्, सृष्टः सन्निधिः यस्य सः, आकस्मिकं (यथा तथा) सृष्टसन्निधिः,-आकस्मिकसृष्टसन्निधिः।

(१३५) अथवा भवतः प्रवर्तना न कथं पिष्टमियं पिनष्टि नः।
स्वत एव सतां परार्थता, ग्रहणानां हि यथा यथार्थता॥
२।६१॥

प्रसङ्गः—'यथा ज्ञानानां प्रामाण्यं स्वतस्तथैव सतां परार्थप्रवृत्तिः स्वभावत एव, न तत्र प्रवर्तनाया अपेक्षा। एतावता अस्माकमियं प्रवर्तना पिष्टपेषणकल्पा' इति प्रोच्य नरपतिः नलः हंसस्यौदार्यं तं प्रति वर्णयत्यत्र।

**अन्वयः**—अथवा इयं नः भवतः प्रवर्तना कथं पिष्टं न पिनष्टि, हि ग्रहणानां यथार्थता यथा सतां परार्थता स्वतः एव।

**व्याख्या**—अथवा=पक्षान्तरे, इयम्=एषा, 'पोत इवाऽत्रलम्बनं भव' इत्यादिवाक्यघटिता, नः=अस्माकं, भवतः=तव हंसस्य, प्रवर्तना=प्रेरणा, कथं=केन प्रकारेण, पिष्टं=चूर्णितं, न=नहि, पिनष्टि=पुनश्चूर्णयति, हि=यतो हि, ग्रहणानां=ज्ञानानां, यथार्थता=याथार्थ्यं, प्रामाण्यमित्याशयः, यथा=इव, सतां=सत्पुरुषाणां, पराऽर्थता=पराऽर्थप्रवृत्तिः, स्वत एव=स्वभावत एव, भवतीति शेषः। अस्मिन् श्लोके उपमासंसृष्टोऽर्थान्तरन्यासालङ्कारः। वियोगिनी वृत्तम्।

**समासः**—यथार्थस्य भावः यथार्थता। परेषु अर्थः (प्रयोजनम्) येषां ते, तेषां भावः परार्थता। स्वस्मात् इति स्वतः।

(१३६) तव वर्त्मनि वर्त्ततां शिवं पुनरस्तु त्वरितं समागमः।
अपि साधय साधयेप्सितं स्मरणीया समये वयं वयः॥
२। ६२॥

**प्रसङ्गः**—पक्षिकुलावतंसेन हंसेन दमयन्त्या साकं विहितं परिणयप्रस्तावं निशम्य सञ्जातहर्षो नरपतिः नलस्तं कुण्डिननगरं प्रति प्रेषयन् तस्याध्वनि शिवं समीहमानः सपद्यागमनाय सम्प्रेरयत्यत्र।

**अन्वयः**—हे वयः! तव वर्त्मनि शिवं वर्तताम्, त्वरितं पुनः समागमः अस्तु, अपि साधय, ईप्सितं साधय, समये वयं स्मरणीयाः।

**व्याख्या**—हे वयः!=हंस!, तव=भवतः, वर्त्मनि=अध्वनि, शिवं=कल्याणं, वर्ततां=भवतु, त्वरितं=क्षिप्रम् एव, पुनः=भूयः, समागमः=सङ्गमः, मया सहेति शेषः, अस्तु=भवतु, विहितकार्यस्य भवत इति शेषः, अपि साधय=व्रज, ईप्सितं=अभिलषितं, भैम्या समं मत्संयोजनमिति भावः, साधय=सम्पादय, समये=कार्यकाले, यथावसरे वा, वयं=नलः, स्मरणीयाः=स्मर्तव्याः। अनन्यगामि कार्यं कुर्या इत्यर्थः। अस्मिन् श्लोके छेकानुप्रासालङ्कारः। वियोगिनी वृत्तम् 'विषमे ससजा गुरुः समे सभरालोऽथ गुरुर्वियोगिनी' इति लक्षणात्।

**समासः**—आप्तुम् इष्टं ईप्सितम्। स्मर्तुं योग्याः स्मरणीयाः।

(१३७) अथ भीमसुताऽवलोकनैः सफलं कर्तुमहस्तदेव सः।
क्षितिमण्डलमण्डनायितं नगरं कुण्डिनमण्डजो ययौ॥
२। ६४॥

**प्रसङ्गः**—'तदा यात्राऽर्थं राजाऽनुज्ञाऽनन्तरं स राजहंसः तद्दिनमेव सफलीकर्तुं भूमण्डलाऽलङ्कारभूतं कुण्डिननगरं प्रति गतवान्' इत्यस्य वर्णनं कुरुते महाकविरत्र।

**अन्वयः**—अथ सः अण्डजः तत् अहः एव भीमसुताऽवलोकनैः सफलं कर्तुं क्षितिमण्डलमण्डनायितं कुण्डिनं नगरं ययौ।

**व्याख्या**—अथ=अनन्तरं, सः=पूर्वकथितः, अण्डजः=हंसः, तद् अहः एव=तद् दिवसम् एव, भीमसुताऽवलोकनैः=दमयन्तीदर्शनैः, सफलं=साऽर्थकं, कर्तुं=विधातुं, क्षितिमण्डलमण्डनायितं=महीमण्डलभूषणस्वरूपं, कुण्डिनं=एतन्नामकं, नगरं=पुरं, ययौ=वव्राज। अस्मिन् श्लोके 'मण्डनायितम्' इत्यत्रोपमालङ्कारः, वियोगिनी वृत्तम्।

**समासः**—अण्डे जातः अण्डजः। भीमस्य सुता, तस्या अवलोकनानि, तैः भीमसुताऽवलोकनैः। फलेन सहितं, तत् सफलं। क्षितेः मण्डलं, मण्डनवत् आचरितं मण्डनायितं, इति क्षितिमण्डलमण्डनायितं।

(१३८) अवलम्ब्य दिदृक्षयाऽम्बरे क्षणमाश्चर्यरसाऽलसं गतम्।
स विलासवनेऽवनीभुजः फलमैक्षिष्ट रसालसङ्गतम्॥
२। ६६॥

**प्रसङ्गः**—प्रतिस्थितस्य, कुण्डिपुरीं प्रति हंसस्याध्वगमवृत्तान्त वर्णयति महाकविरत्र।

**अन्वयः**—स दिदृक्षया अम्बरे क्षणम् आश्चर्यरसाऽलसं गतम् अवलम्ब्य अवनीभुजो विलासवने रसालसङ्गतं फलम् ऐक्षिष्ट।

**व्याख्या**—सः=हंसः, दिदृक्षया=दर्शनवाञ्छया, निजगन्तव्यमार्गस्येति शेषः। अम्बरे=नभसि, क्षणं=किञ्चित्कालं, आश्चर्यरसालसं=अद्भुतरसेन मन्दं, गतं=गतिं, अवलम्ब्य=आश्रित्य, अवनीभुजः=भूपतेः नलस्य, विलासवने=विहारकानने, रसालसङ्गतं=चूतविटपसम्बद्धं, फलम्=आम्रफलम्, ऐक्षिष्ट=अवलोकयामास। प्रस्थाने आम्रफलसन्दर्शनं शुभशकुनरूपमित्याशयः। अस्य श्लोकस्य प्रथम-तुर्यचरणयोरन्त्ययमकालङ्कारः। वियोगिनी वृत्तम्।

**समासः**—द्रष्टुमिच्छा दिदृक्षा, तया दिदृक्षया। आश्चर्यस्य रसः, तेन अलसम्, तत् आश्चर्यरसाऽलसम्। अवनीं भुनक्तीति अवनीभुक्, तस्य अवनीभुजः। विलासस्य वनं, तस्मिन् विलासवने। रसाले संगतं, तत् रसालसंगतम्।

( १३९ ) तनुदीधितिधारया रयाद्गतया लोकविलोकनामसौ ।
छदहेम कषन्निवाऽलसत् कषपाषाणनिभे नभस्तले ॥
४ । ६९ ॥

प्रसङ्गः—द्रष्टव्यम्, श्लो० १३८ ।

अन्वयः—असौ रयात् लोकविलोकनां गतया तनुदीधितिधारया कषपाषाणनिभे नभस्तले छदहेम कषन् इव अलसत् ।

व्याख्या—असौ=हंसः, रयात्=वेगात् हेतो, लोकविलोकनां=आलोकिजनदर्शनं, गतया=प्राप्तया, कौतुकाद्वर्णपरीक्षां च विलोक्यमानयेति भावः, तनुदीधितिधारया=मूर्तिमयूखरेखया, कषपाषाणनिभे=निकषोपलतुल्ये, नभस्तले=गगने, छदहेम=निजपक्षसुवर्णं, कषन्=घर्षन्, इव=यथा, अलसत्=अशोभत । अस्मिन् श्लोके उपमोत्प्रेक्षालङ्कारयोरङ्गाङ्गिभावसत्वात् सङ्करालङ्कारः । वियोगिनी वृत्तम् ।

समासः—लोकानां विलोकना, तां लोकविलोकनाम् । तनोः दीधितिः, तस्या धारा, तया तनुदीधितिधारया । अथवा तनुश्चासौ दीधितिधारा, तया तनुदीधितिधारया । कषश्चासौ पाषाणः, तेन सदृशं कषपाषाणनिभं, तस्मिन् कषपाषाणनिभे । छदयोः हेम, तत् छदहेम ।

( १४० ) न वनं पथि शिश्रियेऽमुना क्वचिदप्युच्चतरद्रुचारुतम् ।
न सगोत्रजमन्ववादि वा गतिवेगप्रसरद्रुचा रुतम् ॥
२ । ७२ ॥

प्रसङ्गः—'राज्ञा नलेन सम्प्रेषितः कुण्डिनपुरीं प्रति प्रस्थितश्च राजहंसः मध्येमार्गं श्रमाऽपनयनार्थं वनं नाश्रितवान्, तथैव बन्धुसम्भाषणादिकञ्च न विहितवान्' इति निगदन् महाकविः श्रीहर्षोऽत्र हंसस्याविरतगमनशीलतां सन्दर्शयति ।

अन्वयः—गतिवेगप्रसरद्रुचा अमुना पथि क्वचित् अपि उच्चतरद्रुचारुतं वनं न शिश्रिये, सगोत्रजं रुतं वा न अन्ववादि ।

व्याख्या—गतिवेगप्रसरद्रुचा=गमनजवप्रसर्पत्क...तना, अमुना=हंसेन, पथि=वर्त्मनि, क्वचित् अपि=कुत्रचित् अपि, उच्चतरद्रुचारुतं=उन्नततरविटपसौन्दर्यं, वनं=काननं, न शिश्रिये=न आश्रितम्, तथा सगोत्रजं=बन्धुजन्यं रुतं वा=कूजितं वा, न अन्ववादि=न अनूदितम् । अस्य श्लोकस्य द्वितीयचतुर्थचरणयोरन्त्ययमकालङ्कारः, वियोगिनी वृत्तम् ।

**समासः**—गतेर्वेगः, प्रसरन्ती रुक् यस्य स प्रसरद्रुक्, गतिवेगेन प्रसरद्रुक्, तेन गतिवेगप्रसरद्रुचा। अतिशयेन उच्चा उच्चतरा, उच्चतराश्च ते द्रुवः; चारो र्भाव चारुता, उच्चतरद्रूणां चारुता यस्मिंस्तत् उच्चतरद्रुचारुतम्। समानं गोत्रं येषां ते सगोत्राः, सगोत्रेभ्यः जातं, सगोत्रजम्।

(१४१) अथ भीमभुजेन पालिता नगरी मञ्जुरसौ धराजिता।
पतगस्य जगाम दृक्पथं हिमशैलोपमसौधराजिता॥
२।७३॥

**प्रसङ्गः**—'राज्ञा नलेन निदेशं समवाप्य विदर्भजानिवासभूतां पुरीं प्रति प्रस्थितो राजहंसः द्रुततरगत्या गच्छन् वर्त्मनि भूमिजयिना भीमभुजेन पालितां हिमालयसंकाशराजभवनशोभितां कुण्डिनपुरीं ददर्श' इत्यस्य मनोरमं वर्णनं विदधाति महाकविरत्र।

**अन्वयः**—अथ धराजिता भीमभुजेन पालिता हिमशैलोपमसौधराजिता मञ्जुः असौ नगरी पतगस्य दृक्पथं जगाम।

**व्याख्या**—अथ=प्रस्थानाऽनन्तरं, धराजिता=पृथ्वीजयिना, भीमभुजेन=भीमभूपबाहुना, पालिता=रक्षिता, हिमशैलोपमसौधराजिता=हिमाचलसम-राजभवनशोभिता, मञ्जुः=रुचिरा, असौ=इयं, नगरी=कुण्डिनपुरी, पत-गस्य=पक्षिणो हंसस्य, दृक्पथं=लोचनमार्गं, जगाम=ययौ, हंसः कुण्डिनपुरीं ददर्श इत्याशयः। अस्मिन् श्लोके द्वितीय-चतुर्थचरणयोः 'असौधराजिता' 'सौध-राजिता' इति पदद्वयसत्वात् विरोधाभासालङ्कारः, 'हिमशैलोपमसौधराजिता' इत्यत्रोपमालङ्कारः, पूर्वार्द्धे अन्त्यानुप्रासालङ्कारः, द्वितीयचतुर्थचरणयोः यम-कालङ्कारः, एवं समेषां संसृष्टिः। वियोगिनी वृत्तम् 'विषमे ससजाः गुरुः समे सभरा लोऽथ गुरुर्वियोगिनी' इति लक्षणात्।

**समासः**—धरां जयतीति धराजित्, तेन धराजिता। बिभेति अस्मात् इति भीमः, भीमस्य भुजः, तेन भीमभुजेन। हिमानां शैलः, तस्य इव उपमा, (सादृश्यम्) येषां तानि, तानि च तानि सौधानि, तैः राजिता, हिमशैलोपम-सौधराजिता। दृशोः पन्थाः दृक्पथः, तम्, दृक्पथम्।

(१४२) दयितं प्रति यत्र सन्ततं रतिहासा इव रेजिरे भुवः।
स्फटिकोपलविग्रहा गृहाः शशभृद्भित्त निरङ्कभित्तयः॥
२।७४॥

**प्रसङ्गः**—नलोपकर्तुं समुद्यतेन भैम्या साकं परिणयप्रस्तावं समुपस्थाप्य

राज्ञो नलस्य निदेशेन विदर्भजानिवासभूतां नगरीं प्रति प्रस्थितेन विहायसाध्वना गच्छता च राजहंसेन मध्येमार्गमलौकिकसुषमासम्पन्नां संदृष्टां कुण्डिनपुरीं पेशलतया समुपवर्णयति महाकविरत्र।

अन्वयः—यत्र स्फटिकोपलविग्रहाः शशभृद्भित्तनिरङ्कभित्तयः गृहा दयितं प्रति सन्ततं भुवः रतिहासा इव रेजिरे।

व्याख्या—यत्र=कुण्डिनपुर्यां, स्फटिकोपलविग्रहाः=स्फटिकमणिमय-शरीराः, शशभृद्भित्तनिरङ्कभित्तयः=शशाङ्कशकलनिष्ककङ्ककुड्याः, गृहा=भवनानि, दयितं प्रति=वल्लभं प्रति, सन्ततं=अविरतं, भुवः=भूमेर्नायिकायाः, रतिहासाः=केलिहास्यानि, इव=यथा, रेजिरे=शुशुभिरे। अस्मिन् श्लोके पूर्वार्द्धे उत्प्रेक्षालङ्कारः, उत्तरार्द्धे उपमालङ्कारः, एतावता द्वयोः संसृष्टिः। वियोगिनी वृत्तम्।

समासः—स्फटिकाश्च त उपलाः, त एव विग्रहाः तेषां ते स्फटिकोपल-विग्रहाः। शशं बिभर्तीति शशभृत्, तस्य भित्तानि, निर्गतः अङ्कः (कलङ्कः) याभ्यस्ताः निरङ्काः, शशभृद्भित्तानि इव निरङ्का भित्तयो येषां ते शशभृद्भित्त निरङ्कभित्तयः। रतेर्हासाः रतिहासाः।

(१४३) सितदीप्रमणिप्रकल्पिते यदगारे हसदङ्करोदसि।
निखिलान्निशि पूर्णिमा तिथीनुपतस्थेऽतिथिरेकिका तिथिः॥ २।७६॥

प्रसङ्गः—द्रष्टव्यम्, श्लो० १४२।

अन्वयः—सितदीप्रमणिप्रकल्पिते हसदङ्करोदसि यदगारे निशि निखिलान् तिथीन् एकिका पूर्णिमा तिथिः अतिथिः (सती) उपतस्थे।

व्याख्या—सितदीप्रमणिप्रकल्पिते= उज्ज्वलदीपनशीलस्फटिकरत्ननिर्मिते, हसदङ्करोदसि=विलसदङ्करोदस्के, द्यावापृथिवीव्यापिनीत्याशयः, यदगारे= कुण्डिनभवने, निशि=रजन्यां, निखिलान्=कृत्स्नान्, तिथीन्=प्रतिपत्प्रभृतीन्, एकिका=एकाकिनी, एकैवेत्याशयः, पूर्णिमा=पौर्णमासी, तिथिः=राकेति भावः, अतिथिः=आगन्तुका सती, उपतस्थे=उपस्थिता। अतिशयोक्तिरलङ्कारोऽत्र, वियोगिनी वृत्तम्।

समासः—दीपनशीला दीप्राः, सिताश्च ते दीप्राः, सितदीप्राश्च ते मणयः, तैः प्रकल्पितम्, तस्मिन् सितदीप्रमणिप्रकल्पिते। हसन् अङ्कः (मध्यभागः) ययोस्ते, हसदङ्के रोदस्यौ (द्यावापृथिव्यौ) यस्य तद् हसदङ्करोदः, तस्मिन्

हृसदङ्करोदसि । यस्याः ( कुण्डिनपुर्याः ) अगारं, तस्मिन् यदगारे । एका एव एकिका ।

( १४४ ) सुदतीजनमज्जनार्पितैर्घुसृणैर्यत्र कषायिताऽऽशया ।
न निशाऽखिलयाऽपि वापिका प्रससाद ग्रहिलेव मानिनी ॥
२।७७॥

प्रसङ्गः—द्रष्टव्यम्, श्लो० १४२ ।

अन्वयः—यत्र सुदतीजनमज्जनार्पितैः घुसृणैः कषायिताऽऽशया वापिका ग्रहिला मानिनी इव अखिलया निशा अपि न प्रससाद ।

व्याख्या—यत्र=कुण्डिनपुर्यां, सुदतीजनमज्जनार्पितैः=सुन्दरीजनाऽवगाहात्क्षालितैः, घुसृणैः=कुङ्कुमैः, कषायिताऽऽशया=सुरभिताऽभ्यन्तरा, भोगचिह्नैः कलुषितहृदया च, वापिका=दीर्घिका, ग्रहिला=निर्बन्धयुक्ता, मानिनी=मानवती नायिका, इव=यथा, अखिलया=समस्तया, निशा अपि=रात्र्या अपि, न प्रससाद=प्रसन्ना नाऽभूत् । पूर्णोपमालङ्कारोऽत्र, वियोगिनी वृत्तम् ।

समासः—शोभना दन्ता यासां ताः सुदत्यः, सुदत्यश्च ताः जनाः, तासां मज्जनं, तेन अर्पितानि, तैः सुदतीजनमज्जनार्पितैः । कषायित आशयः ( आभ्यन्तरभागः, अन्तःकरणं वा ) यस्याः सा कषायिताऽऽशया । ग्रहः अस्ति यस्याः सा ग्रहिला । प्रशस्तो मानः अस्या अस्तीति मानिनी ।

( १४५ ) क्षणनीरवया यया निशि श्रितवप्रावलियोगपट्टया ।
मणिवेश्ममयं स्म निर्मलं किमपि ज्योतिरबाह्यमीक्ष्यते ॥
२।७८॥

प्रसङ्गः—द्रष्टव्यम्, श्लो० १४२ ।

अन्वयः—निशि क्षणनीरवया श्रितवप्रावलियोगपट्टया यया मणिवेश्ममयं निर्मलम् अबाह्यं किमपि ज्योतिः ईक्ष्यते स्म ।

व्याख्या—निशि=रात्रौ, अर्धरात्र इत्याशयः, क्षणनीरवया=स्वल्पकालं निःशब्दया, नगरीपक्षे-जनानां सुप्तत्वात्, योगिनीपक्षे—ध्याननिश्चलत्वादित्याशयः, श्रितवप्रावलियोगपट्टया=समाश्रितयोगवसनसदृशप्राकारपङ्क्त्या, यया=नगर्या, मणिवेश्ममयं=स्फटिकसदनस्वरूपं, निर्मलं=स्वच्छं, अविद्यादिदोषरहितञ्च, अबाह्यम्=अन्तर्वर्ति, किमपि=अवाङ्मनसगोचरं, ज्योतिः=तेजः, आत्मप्रकाशश्च, इक्ष्यते स्म=दृश्यते स्म । अस्मिन् श्लोके प्रस्तुत नगरीविशेषणसाम्यादप्रस्तुतयोगिनीप्रतीतेः समासोक्तिरलङ्कारः । वियोगिनी वृत्तम् ।

समासः—निर्गतो रवो यस्याः-सा नीरवा, क्षणं नीरवा, तया क्षणनीरवया वप्राणाम् आवलिः, योगस्य पट्टः, वप्रावलिः योगपट्ट इव, श्रितोवप्राऽऽवलियोग-पट्टो यया, तया श्रितवप्रावलियोगपट्टया। मणीनां वेश्म, तत् स्वरूपं यस्य तत् मणिवेश्ममयं। निर्गतं मलं यस्मात्तत् निर्मलम्।

( १४६ ) विललास जलाशयोदरे क्वचन द्यौरनुविम्बितेव या।
परिखाकपटस्फुटस्फुरत्प्रतिबिम्बाऽनवलम्बिताऽम्बुनि ॥
२१७९॥

प्रसङ्गः—द्रष्टव्यम्, श्लो० १४२।

अन्वयः—या परिखाकपटस्फुटस्फुरत्प्रतिबिम्बाऽनवलम्बिताऽम्बुनि क्वचन जलाशयोदरे अनुबिम्बिता द्यौः इव विललास।

व्याख्या—या=नगरी, परिखाकपटस्फुटस्फुरत्प्रतिबिम्बाऽनवलम्बिताऽम्बुनि =परिखाव्याजसुस्पष्टसञ्चलत्प्रतिमाऽसम्बद्धजले, क्वचन=कुत्रचन, जलाशयोदरे=हृदमध्ये, अनुबिम्बिता=प्रतिबिम्बिता, द्यौः=अमरावती, इव=यथा, विललास=शुशुभे। अस्मिन् श्लोके कैतवापह्नुति-उत्प्रेक्षालङ्कारयोः संसृष्टिः। वियोगिनी वृत्तम्।

समासः—परितः खन्यते इति परिखा, परिखायाः कपटः, स्फुरच्च तत् प्रतिबिम्बम्, स्फुटं स्फुरत्प्रतिबिम्बम्, परिखाकपटेन स्फुटस्फुरत्प्रतिबिम्बम्, न अवलम्बितम् अनवलम्बितम् ( मध्ये अगृह्यमाणम् ) अम्बु यस्मिन्, परिखाकपट-स्फुटस्फुरत्प्रतिबिम्बेन अनवलम्बिताम्बु, तस्मिन् परिखाकपटस्फुटस्फुरत्प्रति-बिम्बाऽनवलम्बिताऽम्बुनि। जलानाम् आशयः, तस्य उदरं, तस्मिन् जलाशयो-दरे। अनुबिम्बं सञ्जातं यस्याः सा अनुबिम्बिता।

( १४७ ) दधदम्बुदनीलकण्ठतां वहदत्यच्छसुधोज्ज्वलं वपुः।
कथमृच्छतु यत्र नाम न क्षितिभृन्मन्दिरमिन्दुमौलिताम् ॥
२१८२॥

प्रसङ्गः—द्रष्टव्यम्, श्लो० १४२।

अन्वयः—यत्र अम्बुदनीलकण्ठतां दधत् अत्यच्छसुधोज्ज्वलं वपुः वहत् क्षितिभृन्मन्दिरम्, इन्दुमौलितां कथं नाम न ऋच्छतु ?

व्याख्या—यत्र=यस्यां कुण्डिनपुर्याम्, अम्बुदनीलकण्ठतां=जलदनील-कण्ठतां, दधत्=धारयत्, अत्यच्छसुधोज्ज्वलं=अतिशुभ्रलेपनद्रव्यनिर्मलं, वपुः= गात्रं, वहत्=बिभ्रत्, क्षितिभृन्मन्दिरं=भूपतिसदनं, इन्दुमौलितां=चन्द्रमण्डलं-

यावत् शिखरत्वं, चन्द्रशेखरतां वा, कथं नाम=केन प्रकारेण, न=नहि, ऋच्छतु =प्राप्नोतु ? अस्मिन् श्लोके क्षितिभृन्मन्दिरस्येन्दुमौलित्वेन साकं सम्बन्धासत्त्वादपि सम्बन्धकथनादतिशयोक्तिरलङ्कारः। वियोगिनी वृत्तम्।

समासः—अम्बु ददतीति अम्बुदाः, नीलः कण्ठो यस्य सः, नीलकण्ठस्य भावो नीलकण्ठता, अम्बुदैः नीलकण्ठता, ताम् अम्बुदनीलकण्ठताम्। अत्यन्तम् अच्छा, सा चाऽसौ सुधा, अत्यच्छसुधया उज्ज्वलम् अत्यच्छसुधोज्ज्वलम्। क्षितिं बिभर्तीति क्षितिभृत्, क्षितिभृतः मन्दिरम्, क्षितिभृन्मन्दिरम्। इन्दुः मौलौ यस्य; तस्य भावः तत्ता, ताम् इन्दुमौलिताम्।

(१४८) बलिसद्मदिवं स तथ्यवागुपरि स्माऽऽह दिवोऽपि नारदः।
अधराऽथ कृता ययेव सा विपरीताऽजनि भूविभूषया॥
२।८४॥

प्रसङ्गः—द्रष्टव्यम्, श्लो० १४२।

अन्वयः—स तथ्यवाक् नारदः बलिसद्मदिवं दिवः अपि उपरि आह स्म। अथ भूविभूषया यया अधरा कृता इव सा विपरीता अजनि।

व्याख्या—सः=प्रथितः, तथ्यवाक्=सत्यवचनः, नारदः=ब्रह्मतनयः, बलिसद्मदिवं=पातालस्वर्गं, दिवः अपि=स्वर्गादपि, उपरि=ऊर्ध्वस्थितम्, उत्कृष्टञ्च, आह स्म=उक्तवान्। अथ=इदानीं, भूविभूषयापृथिव्यलङ्कारभूतया, यया=कुण्डिननगर्या, अधरा=न्यूना, अधस्ताच्च, कृता इव=विहिता इव, सा=बलिसद्मद्यौ, विपरीता=अन्यादृशी, देवर्षेः नारदोक्तेरिति शेषः; अजनि=जाता, सर्वोपरिस्थितायाः पुनरधः स्थितिः वैपरीत्यमिति भावः। अस्मिन् श्लोके 'बलिसद्मदिवम्' इत्यत्र रूपकालङ्कारः, 'कृता इव' इत्यत्रोत्प्रेक्षालङ्कारः, इत्थमुभयोरलङ्कारयोरङ्गाङ्गिभावसत्वात् सङ्करालङ्कारः। वियोगिनी वृत्तम्।

समासः—तथ्या वाक् यस्य सः तथ्यवाक्। बलेः सद्म, बलिसद्म एव द्यौः, ताम् बलिसद्मदिवम्। भुवो विभूषा, तया भूविभूषया।

(१४९) वरणः कनकस्य मानिनीं दिवमङ्कादमराऽद्रिरागताम्।
घनरत्नकवाटपक्षतिः परिरभ्याऽनुनयन्नुवास याम्॥
२।८६॥

प्रसङ्गः—द्रष्टव्यम्, श्लो० १४२।

**अन्वयः**—कनकस्य वरणः अमराऽद्रिः यां मानिनीम् अङ्कात् आगतां दिवं घनरत्नकवाटपक्षतिः ( सन् ) परिरभ्य अनुनयन् उवास ।

**व्याख्या**—कनकस्य=हेम्नः, वरणः=प्राकार एव, अमराऽद्रिः=सुराचलः; सुमेरुरित्याशयः, यां=नगरीम् एव, मानिनीं=कोपयुताम्, (अतएव) अङ्कात्=स्वोत्सङ्गात्, आगताम्=आयातां, भूलोकमिति शेषः, दिवं=स्वर्गम्, अमरावतीमित्याशयः, घनरत्नकवाटपक्षतिः=निबिडमणिकपाटपक्षमूलः सन्, परिरभ्य=समालिङ्ग्य, अनुनयन्=अनुनयं कुर्वन्, अनुसरन्नित्यर्थः, उवास=उषितवान्, कामिनः प्रणयकुपितां प्रेयसीमाप्रसादमनुगच्छन्तीत्याशयः । अस्मिन् श्लोके सुवर्णप्रकारे सुमेरुशैलस्य, कपाटे पक्षतेः, कुण्डिननगर्याश्चामरावत्या आरोपसत्वात् साङ्गरूपकम्, लिङ्गसाम्यात् सुमेरुशैलेस्वर्गपुर्याश्च नायक-नायिकयोः व्यवहारसमारोपात् समासोक्तिरलङ्कारः, इत्थमुभयोरलङ्कारयोरङ्गाङ्गिभावसत्वात् सङ्करालङ्कारः । वियोगिनी वृत्तम् ।

**समासः**—अमरस्य अद्रिः अमराऽद्रिः । मानः अस्ति अस्याः सा मानिनी; ताम् मानिनीम् । रत्नानां कवाटे, घने रत्नकवाटे एव पक्षती यस्य सः घनरत्नकवाटपक्षतिः । अनुनयतीति अनुनयन् ।

( १५० ) अनलैः परिवेषमेत्य या ज्वलदर्कोपलवप्रजन्मभिः ।
उदयं लयमन्तरा रवेरवहद्बाणपुरीपरार्घ्यताम् ॥ २।८७॥

**प्रसङ्गः**—द्रष्टव्यम्, श्लो० १४२ ।

**अन्वयः**—या रवेः उदयं लयम् अन्तरा ज्वलदर्कोपलवप्रजन्मभिः अनलैः परिवेषम् एत्य बाणपुरीपरार्घ्यताम् अवहत् ।

**व्याख्या**—या=कुण्डिनपुरी, रवेः=भास्करस्य, उदयं=उद्गमं, लयं=अस्तमयं च, अन्तरा=मध्ये, ज्वलदर्कोपलवप्रजन्मभिः=दीप्यमानसूर्यकान्तप्राकारप्रादुर्भूतैः, अनलैः=वह्निभिः, परिवेषं=परिवेष्टनं, एत्य=सम्प्राप्य, बाणपुरीपरार्घ्यतां=बाणाऽसुरनगरीश्रेष्ठतां, अवहत्=सन्धारितवती । अस्मिन् श्लोके निदर्शनालङ्कारः, वियोगिनी वृत्तम् ।

**समासः**—अर्कस्य उपलाः, ज्वलन्तश्च ते अर्कोपलाः, तेषां वप्रः, ज्वलदर्कोपलवप्रात् जन्म येषां ते ज्वलदर्कोपलवप्रजन्मानः, तैः ज्वलदर्कोपलवप्रजन्मभिः । बाणस्य पुरी, परार्घ्यस्य भावः परार्घ्यता, बाणपुर्याः परार्घ्यता, तां बाणपुरीपरार्घ्यताम् ।

( १५१ ) यदगारघटाट्टकुट्टिमस्रवदिन्दूपलतुन्दिलापया ।
मुमुचे न पतिव्रतौचिती प्रतिचन्द्रोदयमभ्रगङ्गया ॥ २।८९॥

प्रसङ्गः—द्रष्टव्यम्, श्लो० १४२ ।

अन्वयः—यदगारघटाट्टकुट्टिमस्रवदिन्दूपलतुन्दिलापया अभ्रगङ्गया प्रतिचन्द्रोदयं पतिव्रतौचिती न मुमुचे ।

व्याख्या—यदगारघटाट्टकुट्टिमस्रवदिन्दूपलतुन्दिलापया = कुण्डिनपुरीभवनाऽवलिक्षौमनिबद्धक्षितिस्यन्दमानचन्द्रकान्तमणीप्रवृद्धजलया, अभ्रगङ्गया = मन्दाकिन्या, प्रतिचन्द्रोदयं = चन्द्रोदये-चन्द्रोदये पतिव्रतौचिती = सत्या औचित्यं, न = नहि, मुमुचे = परित्यक्तवती । अस्मिन् श्लोके अतिशयोक्ति-उदात्तालङ्कारयोरङ्गाङ्गिभावसत्वात् सङ्करालङ्कारः । वियोगिनी वृत्तम् ।

समासः—अगाराणां घटाः, यस्याम् अगारघटाः, यदगारघटासु अट्टाः, तेषां कुट्टिमाः, इन्दोः उपलाः, स्रवन्तश्च ते इन्दूपलाः, यदगारघटाऽट्टकुट्टिमेषु स्रवदिन्दूपलाः, तुन्दिला आपः यस्या सा, तुन्दिलाऽपाः, तुन्दम् अस्याऽस्तीति तुन्दिलः, यदगारघटाऽट्टकुट्टिमस्रवदिन्दूपलैः तुन्दिलापा, तया यदगारघटाट्टकुट्टिमस्रवदिन्दूपलतुन्दिलापया । अभ्रे गङ्गा, तया अभ्रगङ्गया । चन्द्रस्य उदयः, चन्द्रोदये चन्द्रोदये प्रतिचन्द्रोदयं । पत्यौ व्रतं ( नियमः ) यस्याः सा पतिव्रता, उचितस्य भावः औचिती, पतिव्रताया औचिती पतिव्रतौचिति ।

( १५२ ) रुचयोऽस्तमितस्य भास्वतः स्खलिता यत्र निरालयाः खलु ।
अनुसायमभुर्विलेपनाऽऽपणकश्मीरजपण्यवीथयः ॥ २।९०॥

प्रसङ्गः—द्रष्टव्यम्, श्लो० १४२ ।

अन्वयः—यत्र अनुसायं विलेपनाऽऽपणकश्मीरजपण्यवीथयः अस्तम् इतस्य भास्वतः स्खलिताः निरालया रुचयः अभुः खलु ।

व्याख्या—यत्र = कुण्डिनपुर्यां, अनुसायं = प्रतिसन्ध्यासमयं, विलेपनाऽऽपणकश्मीरजपण्यवीथयः = सुगन्धद्रव्यनिषद्याकुङ्कुमरूपविक्रेयवस्तुश्रेणयः, अस्तम् = अस्ताचलम्, इतस्य = गतस्य, भास्वतः = भास्करस्य, स्खलिताः = च्युताः, ( अत एव ) निरालयाः = निराश्रयाः, रुचयः = कान्तयः, अभुः = भान्ति स्म, खलु = किल । अस्मिन् श्लोके प्रतीयमानोत्प्रेक्षा-विशेषालङ्कारयोरङ्गाङ्गिभावसत्वात् सङ्करः । वियोगिनी वृत्तम् ।

समासः—सायं सायम् अनुसायम् । विलेपनानाम् आपणाः, कश्मीरेषु

जातानि कश्मीरजानि, पणितुं योग्यानि पण्यानि, कश्मीरजानि च तानि पण्यानि तेषां वीथयः, विलेनाऽऽपणेषु कश्मीरजपण्यवीथयः, विलेपनाऽऽपणकश्मीरजपण्य-वीथयः। निर्गत आलयो याभ्यस्ताः निरालयाः।

( १५३ ) विततं वणिजाऽऽपणेऽखिलं पणितुं यत्र जनेन वीक्ष्यते।
मुनिनेव मृकण्डुसूनुना जगतीवस्तु पुरोदरे हरेः॥
२।९१॥

प्रसङ्गः—द्रष्टव्यम्, श्लो० १४२।

अन्वयः—यत्र वणिजा पणितुम् आपणे विततम् अखिलं जगतीवस्तु पुरा हरेः उदरे मृकण्डुसूनुना मुनिना इव जनेन वीक्ष्यते।

व्याख्या—यत्र=कुण्डिनपुर्यां, वणिजा=वणिग्जनेन, पणितुं=व्यवहर्तुं, आपणे=पण्यवीथ्यां, विततं=प्रसारितं, अखिलं=अशेषं, जगतीवस्तु=लोक-पदार्थः, पुरा=पूर्वं, हरेः=विष्णोः, उदरे=जठरे, मृकण्डुसूनुना=मार्कण्डेयेन, मुनिना=ऋषिणा, इव=यथा, जनेन=लोकेन, वीक्ष्यते=अवलोक्यते। अस्मिन् श्लोके उपमालङ्कारः, वियोगिनी वृत्तम्।

समासः—जगत्यां वस्तु जगतीवस्तु। मृकण्डोः सूनुः, तेन मृकण्डसूनुना।

( १५४ ) सममेणमदैर्यदापणे तुलयन्सौरभलोभनिश्चलम्।
पणिता न जनाऽऽरवैरवैदपि कूजन्तमलिं मलीमसम्॥
२।९२॥

प्रसङ्गः—द्रष्टव्यम् श्लो० १४२।

अन्वयः—यदापणे सौरभलोभनिश्चलं मलीमसम् अलिम् एणमदैः समं तुल-यन् पणिता कूजन्तम् अपि जनाऽऽरवैः न अवैत्।

व्याख्या—यदापणे=कुण्डिननगरीनिषद्यायां, सौरभलोभनिश्चलं=गन्ध-ग्रहणनिष्पन्दं, मलीमसं=मलिनं, सर्वाङ्गनीलमित्याशयः, अलिं=भ्रमरं, एण-मदैः=कस्तूरीभिः, समं=साकं, तुलयन्=तोलयन्, पणिता=विक्रेता, कूजन्तम् अपि=गुञ्जतम् अपि, जनाऽऽरवैः=लोकशब्दैः, कलकलैरित्याशयः, न=नहि, अवैत्=ज्ञातवान्। अस्मिन् लोके प्रकृतभ्रमरस्य कृष्णवर्णगुणेनाप्रकृतकस्तूर्या तादात्म्यप्रतीतेः सत्वात् सामान्यालङ्कारः, 'सामान्यं प्रकृतस्याऽन्यतादात्म्यं सदृशैर्गुणैः' ( सा. द. ) इति लक्षणात्। वियोगिनी वृत्तम्।

समासः—यस्या आपणः, तस्मिन् यदापणे। सुरभेर्भावः सौरभं; सौरभस्य

लोभः, तेन निश्चलः, तम् सौरभलोभनिश्चलं। एणस्य मदाः, तैः एणमदैः। जनानाम् आरवाः, तैः जनाऽऽरवैः।

(१५५) विधुदीधितिजेन यत्पथं पयसा नैषधशीलशीतलम्।
शशिकान्तमयं तपाऽऽगमे कलितीव्रस्तपति स्म नाऽऽतपः॥ २।९४॥

प्रसङ्गः—द्रष्टव्यम्, श्लो० १४२।

अन्वयः—विधुदीधितिजेन पयसा नैषधशीलशीतलं शशिकान्तम् यं यत्पथं तपाऽऽगमे कलि तीव्र आतपः न तपति स्म।

व्याख्या—विधुदीधितिजेन=शशिकिरणसम्पर्कप्रादुर्भूतेन, पयसा=वारिणा, नैषधशीलशीतलं=नलप्रकृतिसमशीतं, शशिकान्तमयं=चन्द्रकान्तमणिरचितं यत्पथं=कुण्डिनपुरीमार्गं, तपाऽऽगमे=ग्रीष्मप्रवेशे, कलितीव्रः=कलिसमतीक्ष्णः; आतपः=सूर्यद्योतः, न तपति स्म=नातपत्। अस्मिन् श्लोकेऽपि ग्रीष्मागमनकारणसत्वात् तापस्यानुत्पत्तिकथनाच्च विशेषोक्तिरलङ्कारः, 'किलितीव्रः' 'निषैधशीलशीतलम्' इत्युभयत्रोपमालङ्कारः, इत्थमुभयोः संसृष्टिः। वियोगिनीवृत्तम्।

समासः—विधो दीधितिः, तस्या जातं विधुदीधितिजं, तेन विधुदीधितिजेन। निषधानाम् अयं नैषधः, नैषधस्य शीलं, नैषधशीलम् इव शीतलम्, नैषधशीलशीतलम्। प्रचुराः शशिकान्ता यस्मिन्, तम् शशिकान्तमयं। यस्याः पन्थाः, तम् यत्पथम्। तपस्य आगमः, तस्मिन् तपाऽऽगमे। कलिरिव तीव्र कलितीव्रः।

(१५६) परिखावलयच्छलेन या न परेषां ग्रहणस्य गोचरा।
फणिभाषित भाष्यफक्किका विषमा कुण्डलनामवापिता॥ २।९५॥

प्रसङ्गः—द्रष्टव्यम्, श्लो० १४२।

अन्वयः—परिखावलयच्छलेन कुण्डलनाम् अवापिता परेषां ग्रहणस्य न गोचरा या विषमा फणिभाषितभाष्यफक्किका।

व्याख्या—परिखावलयच्छलेन=खेयवेष्टनव्याजेन, ('खेयं तु परिखा' इत्यमरः) कुण्डलांनाम्=मण्डलाकाररेखाम्, अवापिता=सम्प्रापिता, (अतएव) परेषां=रिपूणाम्, अन्येषां च, ग्रहणस्य=आक्रमणस्य, न गोचरा=अविषया, यः=कुण्डिनपुरी, विषमा=दुर्बोधा, फणिभाषितभाष्यफक्किका=पतञ्जलिप्रोक्त-महाभाष्यकुण्डलावृतग्रन्थः, कुण्डिननगरीपातञ्जलमहाभाष्य-

विनष्टग्रन्थभागसदृशी विषमा इत्याशयः। अस्मिन् श्लोके कैतवापह्नुतिः, कुण्डिननगर्याः फणिभाषितभाष्यफक्किकेति सम्भावनयोत्प्रेक्षेत्यलङ्कारद्वयोर-ङ्गाङ्गिभावसत्वात् सङ्करालङ्कारः वियोगिनी वृत्तम्।

समासः—परितः खाताः परिखाः, परिखाणां वलयः, तस्य छलं, तेन परिखावलयच्छलेन। फणा अस्याऽस्तीति फणी, फणिना भाषितम्, फणि-भाषितं च तत् भाष्यम्, फणिभाषितभाष्यस्य फक्किका, फणि भाषितभाष्य-फक्किका।

(१५७) मुखपाणिपदाऽक्षिण पङ्कजै रचिताऽङ्गेष्वपरेषु चम्पकैः।
स्वयमादित यत्र भीमजा स्मरपूजा कुसुमस्रजः श्रियम्॥ २१९६॥

प्रसङ्गः—द्रष्टव्यम्, श्लो० १४२।

अन्वयः—यत्र मुखपाणिपदाऽक्षिण पङ्कजैः, आपरेषु अङ्गेषु चम्पकैः रचिता भीमजा स्मरपूजा कुसुमस्रजः श्रियं स्वयम् आदित।

व्याख्या—यत्र=कुण्डिनपुर्यां, मुखपाणिपदाऽक्षिण=आननहस्तचरणलोचने, पङ्कजैः=अरविन्दैः, अपरेषु=अन्येषु, मुखपाणिपदाक्षिणव्यतिरिक्तेष्वित्याशयः, अङ्गेषु=अवयवेषु, चम्पकैः=चम्पककुसुमैः, रचिता=विनिर्मिता, भीमजा=दमयन्ती, स्मरपूजाकुसुमस्रजः=कामार्चनपुष्पमालायाः, श्रियं=शोभां, स्वयम्=आत्मनैव, आदित=आत्तवती, गृहीतवती। अस्मिन् श्लोके पङ्कजैश्चम्पक-पुष्पैश्च भैम्या आननाद्यङ्गानां रचनाया असम्बन्धेऽपि सम्बन्धकथनादति-शयोक्तिः, एकस्य शोभाया अपरेण ग्रहणासम्भवात् सादृश्याक्षेपान्निदर्शना, इत्यमुभयोरलङ्कारयोरङ्गाङ्गिभावसत्वात् सङ्कारालङ्कारः। वियोगिनी वृत्तम्।

समासः—मुखं च पाणी च पदे च अक्षिणी च मुखपाणिपदाऽक्षि, तस्मिन् मुखपाणिपदाऽक्षिण। भीमाज्जाता भीमजा। स्मरस्य पूजा, तस्यां कुसुमानि, तेषां स्रक्, तस्याः स्मरपूजाकुसुमस्रजः।

(१५८) जघनस्तन भारगौरवाद्वियदालम्ब्य विहर्तुमक्षमाः।
ध्रुवमप्सरसोऽवतीर्य यां शतमध्यासत तत्सखीजनः॥ २१९७॥

प्रसङ्गः—द्रष्टव्यं, श्लो० १४२।

अन्वयः—जघनस्तनभारगौरवात् वियत् आलम्ब्य विहर्तुम् अक्षमाः शतम् अप्सरसः अवतीर्य तत्सखीजनः याम् अध्यासत ध्रुवम्।

**व्याख्या**—जघनस्तनभारगौरवात्=नितम्बस्तनद्वयभारगुरुत्वाद्धेतोः, वियत्=गगनम्, आलम्ब्य=आश्रित्य, विहर्तुम्=सङ्क्रीडितुम्, अक्षमाः=असमर्थाः, शतं=बहुसंख्यकाः, अप्सरसः=स्ववेंश्याः, उर्वश्यादय इत्याशयः। अवतीर्य=स्वर्गादागत्य, तत्सखीजनः=भैमीसख्यः सत्यः, यां=कुण्डिनपुरीम्, अध्यासत=अध्यतिष्ठन्, ध्रुवम्=उत्प्रेक्षायाम्। अप्सरः सदृश्यो भैमीसख्यो दमयन्तीमुपासत इत्याशयः। अस्मिन् श्लोके उत्प्रेक्षालङ्कारः। वियोगिनी वृत्तम्।

**समासः**—जघनं च स्तनं जघनस्तनं, जघनस्तनस्य भारः, गुरोर्भावः गौरवं, जघनस्तनभारस्य गौरवं, तस्मात् जघनस्तनभारगौरवात्। न क्षमा अक्षमाः। सखी चाऽसौ जनः, तस्याः सखीजनः तत्ससीजनः।

**(१५९) स्थितिशालिसमस्तवर्णतां न कथं चित्रमयी बिभर्तु या।**
**स्वरभेदमुपैतु वा कथं कलिताऽनल्पमुखाऽऽरवा न वा॥**
**२१९८॥**

**प्रसङ्गः**—द्रष्टव्यम्, श्लो० १४२।

**अन्वयः**—चित्रमयी या स्थितिशालिसमस्तवर्णतां कथं न बिभर्तु? कलिताऽनल्पमुखाऽरवा या स्वरभेदं कथं वा न उपैतु।

**व्याख्या**—चित्रमयी=आश्चर्यप्रचुरा, आलेख्यप्रचुरा च, या=कुण्डिनपुरी, स्थितिशालिसमस्तवर्णतां=मर्यादाशोभिसमस्तविप्रादिवर्णताम्, ( आश्चर्यप्रचुरापक्षे ), मर्यादाशोभिसमस्तशुक्लादिवर्णताम् ( आलोख्यप्रचुरापक्षे ), कथं=केन प्रकारेण, न=नहि, बिभर्तु=धारयतु, धारयत्येवेति भावः। एवं च कलिताऽनल्पमुखाऽऽरवा=संधारितबहुमुखशब्दाः, सम्प्राप्तचतुर्मुखपञ्चमुखषण्मुखशब्दा च, या=पुरी, स्वरभेदं=ध्वनिनैकविधत्वं सन्धारितबहुमुखशब्दपक्षे ), स्वर्गात् अभेदं ( सम्प्राप्तचतुर्मुखपञ्चमुखषण्मुखशब्दापक्षे ), कथं वा=केन प्रकारेण वा, उपैतु=न प्राप्नोतु, उपैत्येवेत्याशयः। अस्मिन् श्लोके पूर्वार्द्धे उत्तरार्द्धे च 'अर्थापति-शब्दश्लेष-प्रकृतिश्लेष' इत्येतेषां सङ्करः। समुदाये संसृष्टिरलङ्कारः। वियोगिनी वृत्तम्।

**समासः**—प्रचुरं चित्रमस्ति यस्याः साः चित्रमयी। स्थित्या शालन्ते तच्छीलाः इति स्थितिशालिनः, समस्ताश्च ते वर्णाः, स्थितिशालिनः समस्तवर्णा यस्याः सा, तस्याः भावः स्थितिशालिसमस्तवर्णता, ताम् स्थितिशालिसमस्तवर्णताम्,।

( १६० ) लिलिहे स्वरुचा पताकया निशि जिह्वानिभया सुधाकरम् ।
श्रितमर्ककरैः पिपासु यन्नृपसद्माऽमलपद्मरागजम् ॥
२।१००॥

प्रसङ्गः—द्रष्टव्यम्, श्लो० १४२ ।

अन्वयः—अमलपद्मरागजं यन्नृपसद्म, अर्ककरैः श्रितं पिपासुः ( सत् ) स्वरुचा जिह्वानिभया पताकया निशि सुधाकरं लिलिहे ।

व्याख्या—अमलपद्मरागजं=स्वच्छपद्मरागमणिनिर्मितं, यन्नृपसद्म=कुण्डिननगरीराजसदनम्, अर्ककरैः=सूर्यगभस्तिभिः, श्रितम्=अभिव्याप्तम्, अतिसन्निकर्षादिति शेषः, ( अतएव ) पिपासुः=तृषितं सत्, स्वरुचा=निज-सदृशकान्तियुक्तया, जिह्वानिभया=रसनासदृश्या, पताकया=वैजयन्त्या, निशि=रजन्यां, सुधाकरं=शशिं, लिलिहे=आस्वादयामास । अस्मिन् श्लोके 'तद् गुण-प्रतीयमानोत्प्रेक्षा-उपमा' इत्येतेषामङ्गाङ्गिभावसत्वात् सङ्करालङ्कारः, वियोगिनी वृत्तम् ।

समासः—पद्मरागेभ्यो जातं पद्मरागजं, अमलं च तत् पद्मरागजं, अमल-पद्मरागजम् । नृपस्य सद्म, यस्या नृपसद्म, यन्नृपसद्म । अर्कस्य कराः, तैः अर्क-करैः । पातुम् इच्छुः पिपासुः । स्वा रुक् यस्यां सा स्वरुक्, तया स्वरुचा । जिह्वया सदृशी जिह्वानिभा, तया जिह्वानिभया ।

( १६१ ) अमृतद्युतिलक्ष्म पीतया मिलितं यद्वलभीपताकया ।
बलयायितशेषशायिनः सखितामादित पीतवाससः ॥
२।१०१॥

प्रसङ्गः—द्रष्टव्यम्, श्लो० १४२ ।

अन्वयः—पीतया यद्वलभीपताकया मिलितम् अमृतद्युतिलक्ष्म वलयायित-शेषशायिनः पीतवाससः सखिताम् आदित ।

व्याख्या—पीतया=पीतवर्णया, यद्वलभीपताकया=कुण्डिनपुरीवैजयन्त्या, मिलितं=मिश्रितं, सामीप्यादिति शेषः, अमृतद्युतिलक्ष्म=सुधाकरलाञ्छनं, बलयायितशेषशायिनः=मण्डलीभूताऽनन्तनागे शयनशालिनः, पीतवाससः=पीताम्बरस्य विष्णोरित्याशयः, सखितां=सादृश्यं, आदित=अग्रहीत । अस्मिन् श्लोके 'अतिशयोक्ति-उपमा' इत्येतयोरलङ्कारयोरङ्गाङ्गिभावसत्वात् सङ्करा-लङ्कारः, वियोगिनी वृत्तम् ।

**समासः**—यस्यां वलभी, यद्वलभीभ्यां पताका, तया यद्वलभीपताकया। अमृतं द्युतिर्यस्य सः, अमृतद्युतेर्लक्ष्म अमृतद्युतिलक्ष्म। वलयवत् आचरितः वलयायितः, वलयायितश्चासौ शेषः, वलयायितशेषे शेते तच्छीलः वलयायित-शेषशायी, तस्य वलयायितशेषशायिनः। पीतं वासो यस्य स पीतवासाः तस्य पीतवाससः। सख्युर्भावः सखिता, ताम् सखिताम्।

(१६२) यदतिविमलनीलवेश्मरश्मिभ्रमरितभाः शुचिवस्त्रवल्लिः।
अलभत शमनस्वसुः शिशुत्वं दिवसकराऽङ्कतले चला लुठन्ती॥
२।१०३॥

**प्रसङ्गः**—द्रष्टव्यम्, श्लो० १४२।

**अन्वयः**—यदतिविमलनीलवेश्मरश्मिभ्रमरितभाः शुचिवस्त्रवल्लिः दिवस-कराङ्कतले चला लुठन्ती शमनस्वसुः शिशुत्वम् अलभत।

**व्याख्या**—यदतिविमलनीलवेश्मरश्मिभ्रमरितभाः=कुण्डिननगर्यतिनिर्मलेन्द्र-नीलनिकेतनकिरणभ्रमरसदृशकान्तिः, शुचिवस्त्रवल्लिः=शुभ्रवसनव्रततिः, शुक्लवसनपताकेति भावः, दिवसकराऽङ्कतले=सूर्योत्सङ्गप्रदेशे, चला=चपला, लुठन्ती=परिवर्तमाना सती, शमनस्वसुः=यमभगिन्याः यमुनायाः, शिशुत्वं=शैशवावस्थाम्, अलभत=प्राप्तवती। बालयमुनेव शुशुभ इति भावः। बालि-काश्च जनकस्योत्सङ्गे लुठन्तीत्याशयः। अस्मिन् श्लोके 'तद्गुणालङ्कारनिदर्शना-उपमा-इत्यादीनामङ्गाङ्गिभावसत्वात् सङ्करालङ्कारः। पुष्पिताग्रा वृत्तम् 'अयुजि नयुगरेफतो यकारो युजि च नजौ जरगाश्च पुष्पिताग्रा' इति लक्षणात्।

**समासः**—नीलं च तत् वेश्म, नीलवेश्मनो रश्मयः, अत्यन्तं विमलाः, अतिविमलाश्च ते नीलवेश्मरश्मयः, यस्याम् अतिविमलनीलवेश्मरश्मयः, भ्रमरः सञ्जातः अस्यां सा भ्रमरिता, भ्रमरिता भा यस्याः सा, यदतिविमलनीलवेश्म-रश्मिभिः भ्रमरितभाः यदतिविमलनीलवेश्मरश्मिभ्रमरितभाः। वस्त्रम् एव वल्लिः, शुचिश्चासौ वस्त्रवल्लिः, शुचिवस्त्रवल्लिः। दिवसं करोतीति तद्धेतुः दिवसकरः, अङ्कस्य तलम्, दिवसकरस्य अङ्कतलम्, तस्मिन् दिवसकराऽङ्क-तले। शमनस्य स्वसा, तस्याः शमनस्वसु।

---

## तृतीयः सर्गः

( १६३ ) आकुञ्चिताभ्यामथ पक्षतिभ्यां नभोविभागात्तरसाऽवतीर्य ।
निवेशदेशाऽऽततधूतपक्षः पपात भूमावुपभैमि हंसः ॥ ३।१॥

**प्रसङ्गः**—'भैम्या साकं भूपतेः नलस्य परिणयसंयोगसंसाधनाय तदादेशेन हिरण्मयो हंसः कुण्डिनपुरीमुपेत्य दमयन्त्याः उपवने भैमीसविधे आकाशमार्गादवातरत्' इति प्रोच्य महाकविः श्रीहर्षोऽत्र हंसस्य नभसः भूमाववतरणं वर्णयति ।

**अन्वयः**—अथ हंसः आकुञ्चिताभ्यां पक्षतिभ्यां नभोविभागात् तरसा अवतीर्य निवेशदेशाऽऽततधूतपक्षः उपभैमि भूमौ पपात ।

**व्याख्या**—अथ = मण्डलीकरणाऽनन्तरं, हंसः = राजहंसः, आकुञ्चिताभ्यां = सङ्कुचिताभ्यां, पक्षतिभ्यां = पक्षमूलाभ्यां, नभोविभागात् = गगनप्रदेशात्, तरसा = जवेन, अवतीर्य = भूमिप्रदेशमागत्य, निवेशदेशाऽऽततधूतपक्षः = उपनिवेशस्थानविस्तारितप्रकम्पितपतत्त्रः सन्, उपभैमि = भैम्याः अन्तिके । भूमौ = पृथिव्यां, पपात = अवातरत् । अस्मिन् श्लोके स्वभावोक्तिरलङ्कारः । 'इन्द्रवज्रा-उपेन्द्रवज्रा' इत्युभयोर्वृत्तयोः सम्मिश्रणादुपजातिवृत्तमत्र 'स्यादिन्द्रवज्रा यदि तौ जगौ गः, उपेन्द्रवज्रा जतजास्ततो गौ । अनन्तरोदीरितलक्ष्मभाजौ पादौ यदीयावुपजातयस्ताः ।' इति लक्षणात् ।

**समासः**—हसतीति हंसः । नभसो विभागः, तस्मात् नभोविभागात् । निवेशस्य देशः, समन्तात् ततौ आततौ, आततौ धूतौ पक्षौ येन सः, निवेशदेशे आततधूतपक्षः निवेशदेशाततधूतपक्षः । भैम्याः समीपे उपभैमि ।

( १६४ ) नेत्राणि वैदर्भसुतासखीनां विमुक्ततत्तद्विषयग्रहाणि ।
प्रापुस्तमेकं निरुपाख्यरूपं ब्रह्मेव चेतांसि यतव्रतानाम् ॥ ३।३॥

**प्रसङ्गः**—'नैषधं प्रत्युपकर्तुं समुद्यतः प्रियमानसो राजहंसः नरपतेः नलस्य परिणयप्रस्तावं समादाय कुण्डिनपुर्यां भैमीकानने दमयन्त्याः सविधे यदा सम्प्राप्तस्तदा भैमीवयस्यानां च विलोचनानि तमेकपदमेवासादयामासुः ( अत्यादरेण अद्राक्षुः )' इत्यस्य वर्णनं चारुतया विदधाति महाकविरत्र ।

**अन्वयः**—वैदर्भसुतासखीनां नेत्राणि विमुक्ततत्तद्विषयग्रहाणि एकं निरूपाख्यरूपं तं हंसं यतव्रतानां चेतांसि ब्रह्म इव प्रापुः ।

व्याख्या— वैदर्भसुतासखीनां=दमयन्तीवयस्यानां, नेत्राणि=लोचनानि, विमुक्ततत्तद्विषयग्रहाणि=सम्परित्यक्ततत्तच्छब्दादिविषयग्रहाणि (सन्ति चेतांसि) एकम्=एकचरं, ब्रह्मपक्षे—अद्वितीयं, निरुपाख्यरूपं=अनिर्वाच्याकारं, ब्रह्मपक्षे—अनिर्वचनीयस्वरूपं, तं=पुरोवर्तिनं, हंसं=राजहंसं, ब्रह्मपक्षे—तत्पदार्थभूतं, यतव्रतानां=योगिनां, चेतांसि=मनांसि, ब्रह्म=परमात्मानम्, इव=यथा, प्रापुः=आसादयामासुः। अस्मिन् श्लोके उपमालङ्कारः, उपजाति वृत्तम्।

समासः— विदर्भाणां राजा वैदर्भः, तस्य सुता, तस्याः सखीनां, वैदर्भसुतासखीनाम्। ते च ते च तत्ते, तत्ते च ते विषयाः तत्तद्विषयाः, तत्तद्विषयाणां ग्रहाः, विमुक्ताः तत्तद्विषयग्रहा यैस्तानि तत्तद्विषयग्रहाणि। निर्गता उपाख्या यस्मात्तत् निरुपाख्यं, तत् रूपं यस्य, तम् (तत् ब्रह्मपक्षे) निरूपाख्यरूपं। यतं व्रतं येषां ते यतव्रताः, तेषां यतव्रतानाम्।

(१६५) हंसं तनौ सन्निहितं चरन्तं मुनेर्मनोवृत्तिरिव स्विकायाम्।
ग्रहीतुकामादरिणा शयेन यत्नादसौ निश्चलतां जगाहे॥
३।४॥

प्रसङ्गः—'निजोपवने स्वालिभिः साकं विचरन्ती विदर्भजा आत्मनोऽन्तिके पतन्तं राजहंसं विलोक्य सञ्जाताश्चर्या सती हंससौन्दर्यसमाकृष्टमना तं स्वकरेण ग्रहीतुं निश्चलतामाश्रित्य कृतोद्योगा अभवदि'त्यस्य मनोरमं वर्णनं विदधाति महाकविरत्र।

अन्वयः—असौ मुनेः मनोवृत्तिः इव स्विकायां तनौ सन्निहितं चरन्तं हंसं अदरिणा शयेन (आदरिणा आशयेन वा) ग्रहीतुकामा (सती) यत्नात् निश्चलतां जगाहे।

व्याख्या—असौ=भैमी, मुनेः=योगिनः, मनोवृत्तिः=चित्तवृत्तिः, इव=यथा, स्विकायां=स्वकीयायां, तनौ=शरीरान्तिके, (मुनिमनोवृत्तिपक्षे—शरीराभ्यन्तरे) सन्निहितं=सन्निकृष्टस्थम्, (मुनिमनोवृत्तिपक्षे—आविर्भूतं) चरन्तं=सञ्चरन्तं (मुनेर्मनोवृत्तिपक्षे—वर्तमानं), हंसं=राजहंसं (मुनिमनोवृत्तिपक्षे— परमात्मानं), अदरिणा=निर्भयेन, शयेन=पाणिना, ('पञ्चशाखः शयः पाणिः' इत्यमरः) (मुनिमनोवृत्तिपक्षे—आदरिणा=आदरान्वितेन, आशयेन=चित्तेन), ग्रहीतुकामा=आदातुकामा, (मुनिमनोवृत्तिपक्षे—साक्षात्कर्तुकामा च सती) यत्नात्=प्रयत्नात्, निश्चलतां=निश्चलाऽङ्गत्वं,

( मुनिमनोवृत्तिपक्षे—स्थिरतां ) जगाहे=जगाम । अस्मिन् श्लोके श्लेषोपमयोरङ्गाङ्गिभावसत्वात् सङ्करालङ्कारः । उपजाति वृत्तम् ।

**समासः**—मनसो वृत्तिः मनोवृत्तिः । स्वा एव स्विका, तस्यां स्विकायां । दरः अस्याऽस्तीति दरी, न दरी अदरी, तेन अदरिणा । आदरः अस्याऽस्तीति आदरी, तेन आदरिणा । ग्रहीतुं कामः यस्याः सा ग्रहीतुकामा । निश्चलस्य भावो निश्चलता, ताम् निश्चलताम् ।

( १६६ ) तामिङ्गितैरप्यनुमाय मायामयं न भैम्या वियदुत्पपात ।
तत्पाणिमात्मोपरिपातुकं तु मोघं वितेने प्लुतिलाघवेन ॥
३।५॥

**प्रसङ्गः**—'प्रियमानसो राजहंसो भैम्याः ग्रहीतुं समीहां विज्ञायापि स्वप्लुतिलाघवेन तस्याः प्रयत्नं नैष्फल्यमकरोदि'त्यस्य मनोरमं वर्णनं विदधाति महाकविरत्र ।

**अन्वयः**—अयं तां भैम्या मायाम् इङ्गितैः अनुमाय अपि धैर्यात् वियत् न उत्पपात, आत्मोपरिपातुकं तत्पाणिं तु प्लुतिलाघवेन मोघं वितेने ।

**व्याख्या**—अयं=राजहंसः, तां=पूर्वकथितां, भैम्याः=दमयन्त्याः, मायां=छलं, स्वग्रहणार्थमिति शेषः, इङ्गितैः=चेष्टितैः, अनुमाय अपि=विज्ञाय अपि, धैर्यात्=स्थैर्यमास्थाय, वियत्=गगनं प्रति, न=नहि, उत्पपात=उत्पतितवान्, आत्मोपरिपातुकं=निजोपरिपतयस्तुं, तत्पाणिं तु=भैमीकरं तु, प्लुतिलाघवेन=उत्पतनचातुर्येण, मोघं=व्यर्थं, वितेने=विहितवान् । आशां समुत्पाद्यापि भैम्याः पाणिगतो नाऽभूदित्याशयः । स्वभावोक्तिरलङ्कारः, उपजाति वृत्तम् ।

**समासः**—पतनशीलः पातुकः, उपरि पातुकः, आत्मनः उपरि पातुकः, तम् आत्मोपरिपातुकम् । तस्याः पाणिः, तम् तत्पाणिं । प्लुतेर्लाघवं, तेन प्लुतिलाघवेन ।

( १६७ ) व्यर्थीकृतं पत्त्ररथेन तेन तथाऽवसाय व्यवसायमस्याः ।
परस्परामर्पितहस्ततालं तत्कालमालीभिरहस्यताऽलम् ॥
३।६॥

**प्रसङ्गः**—'भैम्याः हंसग्रहणात्मकं व्यवसायं विहगश्रेष्ठेन व्यर्थीकृतं विज्ञाय तत्सखीभिः परस्परस्यां दत्तकरताडनपुरस्सरमलं हसितम्' इति प्रोच्य दमयन्त्या उपरि तस्याः सखीजनानां सोपहासं समुपवर्णयति महाकविरत्र ।

**अन्वयः**—अस्या व्यवसायं तेन पत्त्ररथेन तथा व्यर्थीकृतम् अवसाय तत्कालं परस्परम् अर्पितहस्तातालम् आलीभिः अलम् अहस्यत ।

**व्याख्या**—अस्याः=विदर्भजायाः, व्यवसायं=हंसग्रहणप्रयत्नं, तेन=पूर्वकथितेन, पत्त्ररथेन=राजहंसेन, तथा=तादृशं, व्यर्थीकृतं=निष्फलीकृतम्, अवसाय=विज्ञाय, तत्कालं=तस्मिन् क्षणे, परस्परम्=परस्परस्याम्, अर्पित-हस्ततालं=दत्तपाणिताडनपुरस्सरं, आलिभिः=सखीभिः, अलम्=भृशं अहस्यत=हसितम् । अस्मिन् श्लोके यमकानुप्रासयोः सङ्करः, उपजाति वृत्तम् ।

**समासः**—पत्त्रम् एव रथः ( यानम् ) यस्य स पत्त्ररथस्तेन पत्त्ररथेन । विगतः अर्थः यस्मात् सः, अव्यर्थो व्यर्थो यथा सम्पद्यते तथा कृतः, तम् व्यर्थीकृतम् । तं च तं कालम् तत्कालम् । हस्ताभ्यां तालः, अर्पितो हस्ततालो यस्मिन् कर्मणि, तद् यथा तथा अर्पितहस्ततालम् ।

( १६८ ) 'शस्ता न हंसाऽभिमुखी तवेयं
यात्रे'ति ताभिश्छलहस्यमाना ।
साऽऽहस्म 'नैवाऽशकुनीभवेन्मे
भाविप्रियावेदक एव हंसः ॥३।९॥

**प्रसङ्गः**—'शास्त्रविरोधात् श्रमसन्तापदृष्टदोषाच्च हंसस्याभिमुखी तवेयं यात्रा शस्ता ने'त्यालिभिः निषिध्यमानाऽपि भैमी 'एष हंसः मम नाशकुनीभवे-दि'ति प्रोच्य स्वयात्रानिषेधपक्षे दोषपरिहारपुरस्सरं हंसानुसरणस्यौचित्यमत्र प्रतिपादयति ।

**अन्वयः**—'तव इयं हंसाऽभिमुखी यात्रा शस्ता न' इति ताभिः छलहस्य-माना ( सती ) सा 'भाविप्रियावेदक एष हंसो मे न अशकुनीभवेत् एव' इति आह स्म ।

**व्याख्या**—'( भो भैमि ! ) तव=भवत्याः, इयं=एषा, हंसाऽभिमुखी=राजहंससम्मुखी, भास्करसम्मुखी च, यात्रा=गमनं, शस्ता=श्रेयस्करी, न=नहि, विद्यत इति शेषः, शास्त्रविरुद्धत्वात् श्रमसन्तापरूपदृष्टदोषाच्चेति भावः । इति=इत्थं, ताभि=आलिभिः, छलहस्यमाना=व्याजोक्त्या उपहस्यमाना सती, सा=विदर्भजा, भाविप्रियावेदकः=मङ्गलमूर्तित्वादागामिशुभसूचकः, एषः=समीपतरवर्ती, हंसः=राजहंसः, मे=मम दमयन्त्याः, न अशकुनीभवेत् एव=नापशकुनरूपो भवेदेव, अथवा नापक्षीभवेदेव, इति=इत्थं, आह स्म=उक्तवती । अस्मिन् श्लोके श्लेषालङ्कारः, उपजातिवृत्तश्चास्ति ।

**समासः**—हंसस्य अभिमुखी हंसाऽभिमुखी। हस्यते इति हस्यमाना, छलेन हस्यमाना छलहस्यमाना। भावि च तत्प्रियम्, तस्य आवेदकः, भाविप्रियावेदकः।

(१६९) हंसोऽप्यसौ हंसगतेः सुदत्या पुरः पुरश्चारु चलन्बभासे।
वैलक्ष्यहेतोर्गतिमेतदीयामग्रेऽनुकृत्योपहसन्निवोच्चैः ॥ ३।१०॥

**प्रसङ्गः**—'यथा परिहासकाः तत्तच्चेष्टानुकरणेन जनानां विस्मयं समुत्पादयन्ति, तथैव राजहंसः हंसगतेः दमयन्त्याः गतिं नाटयन् तस्याः पुरः पुरश्चलति स्म' इति प्रोच्य महाकविरत्र पूर्वं भैमीचेष्टामभिधाय साम्प्रतं हंसव्यापारं प्रतिपादयति।

**अन्वयः**—असौ हंसः अपि हंसगतेः सुदत्याः पुरः पुरः अग्रे चारुचलन् वैलक्ष्यहेतोः एतदीयां गतिम् अनुकृत्य उच्चैः उपहसन् इव बभासे।

**व्याख्या**—असौ=पूर्वोक्तः, हंसः अपि=राजहंसोऽपि, सुदत्याः=चारुदशनायाः भैम्याः, पुरः पुरः=पुरतः पुरतः, अग्रे=समन्तात्, चारु=रम्यं, चलन्=व्रजन्, वैलक्ष्यहेतोः=विस्मयजननाऽर्थम्, ('विलक्षो विस्मयाऽन्वितः' इत्यमरः) एतदीयां=भैमीसम्बन्धिनीं, गतिं=गमनम्, अनुकृत्य=अभिनीय, उच्चैः=अतिमात्रं, उपहसन्=उपहासं कुर्वन्, इव=यथा, बभासे=बभौ। अस्मिन् श्लोके उत्प्रेक्षालङ्कारः उपजातिवृत्तञ्च विद्यते।

**समासः**—हंसस्य इव गतिर्यस्याः सा हंसगतिः, तस्याः हंसगतेः। शोभना दन्ता यस्याः सा सुदती, तस्याः सुदत्याः। वैलक्ष्यस्य हेतुः, तस्य वैलक्ष्यहेतोः।

(१७०) अये! कियद्यावदुपैषि दूरं
व्यर्थं? परिश्राम्यसि वा किमर्थम्?।
उदेति ते भीरपि किन्नु बाले!
विलोकयन्त्या न घना वनाऽऽलीः? ॥३।१३॥

**प्रसङ्गः**—प्रियमानसो राजहंसः रहसि भैमीं समासाद्य नरपतिना नलेन साकं परिणयस्य स्वप्रस्तावं समुपस्थापयितुं शुकवत् तां प्रति मनुष्यवाचा अवादीदित्यस्य मनोरमवर्णनं विदधाति महाकविरत्र।

**अन्वयः**—अये बाले! व्यर्थं कियत् दूरं यावत् उपैषि? वा किमर्थं परिश्राम्यसि? घना वनालीः विलोकयन्त्याः ते भीः अपि न उदेति किन्नु?

**व्याख्या**—अये बाले!=भो तरुणि!, व्यर्थं=निरर्थकं, कियत्=किंपरि-

माणं, दूरं यावत्=विप्रकृष्टपर्यन्तम्, उपैषि=उपैष्यसि, वा=अथवा, किमर्थं केन निमित्तेन, परिश्राम्यसि=परिश्रान्ता भवसि, घनाः=निविडाः, वनालीः= काननपङ्क्तीः, विलोकयन्त्याः=पश्यन्त्याः, ते=तव, भीः अपि=भयम् अपि, न उदेति किन्तु=नोत्पद्यते किम् ? उपजाति वृत्तमत्र ।

समासः—किं परिमाणं कियत् । कस्मै इदम् किमर्थम् । वनानाम् आल्यः, ताः वनालीः ।

( १७१ ) वृथाऽर्पयन्तीमपथे पदं त्वां मरुल्लसत्पल्लवपाणिकम्पैः ।
आलीव पश्य प्रतिषेधतीयं कपोतहुङ्कारगिरा वनाऽऽलिः ॥
३।१४॥

प्रसङ्गः—द्रष्टव्यम्, श्लो० १७० ।

अन्वयः—वृथा अपथे पदम् अर्पयन्ती त्वां मरुल्लसत्पल्लवपाणिकम्पैः कपोतहुङ्कारगिरा च इयं वनालिः आली इव प्रतिषेधति, पश्य ।

व्याख्या—( हे भैमि ! ) वृथा=निरर्थकमेव, अपथे=कुमार्गे, अकृत्ये च, पदं=पादं व्यवसायं च, अर्पयन्तीम्=कुर्वतीं, त्वामिति शेषः, मरुल्लसत्पल्लव-पाणिकम्पैः=पवनसञ्चलत्किसलयहस्तवेपथुभिः, कपोतहुङ्कारगिरा=पारावत-हुङ्करणवाण्या च, इयम्=एषा, वनाऽऽलिः=अरण्यपङ्क्तिः, आली=सखी, इव=यथा, प्रतिषेधति=विनिवारयन्ति, पश्य=अवलोकय । यथा लोके कुमार्गप्रवृत्तं जनं सुहृद् हस्तेन वाण्या च विनिवारयति, तथैव इयं विपिनावलिः प्रतिषेधतीत्याशयः रूपकोपमालङ्कारयोरङ्गाङ्गिभावसत्वात् सङ्करालङ्कारोऽत्र, उपजाति वृत्तञ्च ।

समासः—न पन्था अपथम्, तस्मिन् अपथे । पल्लव एव पाणिः, लसच्चासौ पल्लवपाणिः, मरुता लसत्पल्लवपाणिः, तस्य कम्पाः, तैः मरुल्लसत्पल्लवपाणि-कम्पैः । हुङ्कार एव गीः, कपोतानां हुङ्कारगीः, तया कपोतहुङ्कारगिरा । वनानाम् आलिः वनालिः ।

( १७२ ) धार्यः कथङ्कारमहं भवत्या वियद्विहारी वसुधैकगत्या ? ।
अहो ? शिशुत्वं तव खण्डितं न स्मरस्य सख्या वयसाऽप्यनेन ॥
३।१५॥

प्रसङ्गः—द्रष्टव्यम्, श्लो० १७० ।

अन्वयः—वसुधैकगत्या भवत्या वियद्विहारी अहं कथङ्कारं धार्यः ? स्मर-स्य सख्या अनेन वयसा अपि तव शिशुत्वं खण्डितं न अहो ! ।

व्याख्या—वसुधैकगत्या=महीमात्रचारिण्या, भवत्या=त्वया दमयन्त्या, वियद्विहारी=गगनचारी, अहं=विहगः, कथङ्कारं=केन प्रकारेण, धार्यः=ग्रहीतुं शक्यः। स्मरस्य=मदनस्य, सख्या=सुहृदा, अनेन=एतेन, वयसा अपि=अवस्थया अपि, तारुण्येनापीत्याशयः, तव=भवत्याः, शिशुत्वं=शैशवं, खण्डितं न=परावर्तितं न, अहो!=आश्चर्यम्। काव्यलिङ्गमलङ्कारोऽत्र, उपजातिवृत्तञ्च।

समासः—एका गतिर्यस्याः सा एकगतिः, वसुधायाम् एकगतिः, तया वसुधैकगत्या। विहरतीति तच्छीलो विहारी, वियति विहारी वियद्विहारी।

( १७३ ) सहस्रपत्रासनपत्त्रहंसवंशस्य पत्त्राणि पतत्त्रिणः स्मः।
अस्मादृशां चाटुरसाऽमृतानि स्वर्लोकलोकेतरदुर्लभानि॥
३।१६॥

प्रसङ्गः—प्रियमानसो राजहंसः भैमीं रहसि समानीय नरपतिनलविषयकं परिणयप्रस्तावं समुपस्थापनात् प्राक् तदग्रे स्वपरिचयं प्रस्तौति।

अन्वयः—पाठाऽनुसारी।

व्याख्या—सहस्रपत्त्रासनपत्त्रहंसवंशस्य = विधातावाहनहंसान्वयस्य, पत्त्राणि=वाहनानि, पतत्त्रिणः=विहगाः, स्मः=भवामः, वयमिति शेषः। अस्मादृशानां=अस्मत्सदृशानाम्, चाटुरसाऽमृतानि=सुभाषितशृङ्गारादिरस-पीयूषाणि, स्वर्लोकलोकेतरदुर्लभानि=सुरभिन्नदुष्प्राप्याणि, सन्तीति शेषः। अस्मिन् श्लोके रूपकालङ्कारः, उपजाति वृत्तम्।

समासः—सहस्रं पत्राणि यस्य तद् सहस्रपत्रम्, सहस्रपत्रम् आसनम् यस्य स सहस्रपत्रासनः, पत्त्राणि च ते हंसाः, सहस्रपत्रासनस्य पत्त्रहंसाः, तेषां वंशः, तस्य सहस्रपत्रासनपत्त्रहंसवंशस्य। अस्मानिव पश्यन्तीति अस्मादृशः, तेषाम् अस्मादृशाम्। चाटुषु रसाः, ते एव अमृतानि, चाटुरसाऽमृतानि। स्वश्चासौ लोकः स्वर्लोकः स्वर्लोके लोकाः ( देवजनाः ), स्वर्लोकलोकेभ्यः इतरे ( अन्ये, मानवा इत्यर्थः ) स्वर्लोकलोकेतरैः दुर्लभानि, स्वर्लोकलोकेतर-दुर्लभानि।

( १७४ ) धातुर्नियोगादिह नैषधीयं लीलासरः सेवितुमागतेषु।
हैमेषु हंसेष्वहमेक एव भ्रमामि भूलोकविलोकनोत्कः॥
३।१८॥

प्रसङ्गः—प्रियमानसो राजहंसोऽत्र भैमीं प्रति स्वपरिचयपुरस्सरम् आत्मनः क्ष्मालोकसञ्चरणे कारणं वर्णयति।

अन्वयः—धातुः नियोगात् इह नैषधीयं लीलासरः सेवितुम् आगतेषु हैमेषु हंसेषु अहम् एक एव भूलोकविलोकनोत्कः ( सन् ) भ्रमामि।

व्याख्या—धातुः=परमेष्ठिनः, नियोगात्=आदेशात्, इह=अस्मिन् भूलोके, नैषधीयं=नलीयं, लीलासरः=विलासकासारं, सेवितुं=विहर्तुं, आगतेषु=आयातेषु, हैमेषु=काञ्चनमयेषु, हंसेषु=चक्राऽङ्गेषु, अहम्=राजहंसः, एक एव=एकाकी एव, भूलोकविलोकनोत्कः=पृथ्वीलोकदर्शनोत्कण्ठितः, सन्, भ्रमामि=पर्यटामि। उपजातिवृत्तमत्र।

समासः—निषधानामयं नैषधः, नैषधस्य इदम् नैषधीयम्। हेम्नो विकार तेषु हैमेषु। भूश्चासौ लोकः, तस्य विलोकनं, तस्मिन् उत्कः, भूलोकविलोकनोत्कः।

( १७५ ) बन्धाय दिव्ये न तिरश्चि कश्चि-
त्पाशादिरासादितपौरुषः स्यात्।
एकं विना मादृशि तन्नरस्य
स्वर्भोगभाग्यं विरलोदयस्य ॥३।२०॥

प्रसङ्गः—प्रियमानसो राजहंसः 'स्वर्भोगभाग्यशालिनं नरं ( नलं ) विना मां ग्रहीतुं न कोऽप्यन्यो जनः समर्थः' इति निगदन् व्याधादिबन्धनमपि मे नास्तीति भैमीं प्रति सविशेषमत्र वर्णयति।

अन्वयः—मादृशि दिव्ये तिरश्चि विरलोदयस्य नरस्य एकं स्वर्भोगभाग्यं विना कश्चित् पाशादिः बन्धाय आशादितपौरुषो न स्यात्।

व्याख्या—मादृशि=मत्सदृशे, दिव्ये=सुरलोकजन्ये, तिरश्चि=खगे विषये, विरलोदयस्य=दुर्लभजन्मनः, नरस्य=मानवस्य, ( अथवा विरलोदयस्य=रेफस्थाने लकारान्वितस्य, नरस्य=नलस्येतिभावः ) एकं=प्रधानं, स्वर्भोगभाग्यं विना=स्वर्गसुखदिष्टं विना, कश्चित्=कश्चन, पाशादि=पाशाद्युपागः, बन्धाय=बन्धनाऽर्थम्, आसादितपौरुषः=अधिगतपुरुषार्थः, न स्यात्=न भवेत्। अस्मिन् श्लोके 'विरलोदयस्य नरस्य' इत्यत्र श्लेषालङ्कारः, उपजाति वृत्तम्।

समासः—विरल उदयो यस्य स विरलोदयः, तस्य विरलोदयस्य। अथवा विगतः रः यस्मात् सः विरः, लस्य उदयो यस्मिन् स लोदयः, विरश्चासौ

लोदयः विरलोदयः। स्वः भोगः स्वर्भोगः, तस्यः, भाग्यं, तत् स्वर्भोगभाग्यम्। पाशः आदिर्यस्य सः पाशादिः। आसादितं पौरुषं येन सः आसादितपौरुषः।

( १७६ ) इष्टेन पूर्तेन नलस्य वश्याः स्वर्भोगमत्राऽपि सृजन्त्यमर्त्याः।
महीरुहो दोहदसेकशक्तेराकालिकं कोरकमुद्गिरन्ति ॥
३।२१॥

प्रसङ्गः—भूलोकविलोकनोत्कः प्रियमानसो राजहंसः उपभैमि नलं प्रशंसन् तस्य स्वर्भोगभाग्यं प्रतिपादयत्यत्र।

अन्वयः—इष्टेन पूर्तेनवश्याः अमर्त्याः नलस्य अत्र अपि स्वर्भोगं सृजन्ति, महीरुहो दोहदसेकशक्तेः आकालिकं कोरकम् उद्गिरन्ति।

व्याख्या—इष्टेन=यागेन, पूर्तेन=खाताऽऽदिकर्मणा, वश्याः=वशङ्गताः, अमर्त्याः=सुराः, नलस्य=एतन्नामकस्य भूपतेः, अत्र अपि=क्ष्मालोके अपि, स्वर्भोगं=स्वर्गानन्दं, सृजन्ति=सम्पादयन्ति। महीरुहः=विटपाः, दोहदसेकशक्तेः=धूपादिदोहदसेचनसामर्थ्यात्, आकालिकं=असमयजन्यं, कोरकम्=कलिकाम्, उद्गिरन्ति=समुत्पादयन्ति। दोहदसेचनादिभ्यस्तरव इव ईष्टपूर्तादिकर्मभ्योऽमरा अपि देशकालावनपेक्ष्याऽपि फलं ददतीत्याशयः। अस्मिन् श्लोके दृष्टान्तालङ्कारः, उपजातिवृत्तञ्चास्ति।

समासः—वशं गताः वश्याः। दोहदं च सेकश्च दोहदसेकौ, तयोः शक्तिः, तस्याः दोहदसेकशक्तेः। न कालः अकालः, अकाले भवः आकालिकः, तम् आकालिकम्।

( १७७ ) सुवर्णशैलादवतीर्य तूर्णं स्ववर्हिनीवारिकणाऽवतीर्णैः।
तं वीजयामः स्मरकेलिकाले पक्षैर्नृपं चामरबद्धसख्यैः ॥
३।२२॥

प्रसङ्गः—द्रष्टव्यम्, श्लो० १७६।

अन्वयः—सुवर्णशैलात् तूर्णम् अवतीर्य स्ववर्हिनीवारिकणाऽवतीर्णैः चामरबद्धसख्यैः पक्षैः स्मरकेलिकाले तं नृपं वीजयामः।

व्याख्या—सुवर्णशैलात्=सुमेरुपर्वतात्, तूर्णं=क्षिप्रम्, अवतीर्य=अवरुह्य, स्ववर्हिनीवारिकणाऽवतीर्णैः=जाह्नवीजलबिन्दुसम्पृक्तैः, चामरबद्धसख्यैः चामरसदृशैः, पक्षैः=पतत्रैः, स्मरकेलिकाले=रतिक्रीडासमये, तं=पूर्वोक्तं, नृपं=महीपतिं नलं, वीजयामः=वातं सृजामः, भूपतेः नलस्य सुरतश्रमं विनिवारयाम इत्याशयः। उपजाति वृत्तमत्र।

समासः—सुवर्णस्य शैलः, तस्मात् सुवर्णशैलात् । वारिणः कणाः, स्वर्वाहिन्याः वारिकणाः, तैः अवकीर्णाः, तैः स्वर्वाहिनीवारिकणाऽवकीर्णैः । बद्धं सख्यं यैस्ते, चामरेषु बद्धसख्याः, तैः चामरबद्धसख्यैः । स्मरस्य केलिः, तस्य कालः, तस्मिन् स्मरकेलिकाले ।

(१७८) क्रियेत चेत्साधुविभक्तिचिन्ता व्यक्तिस्तदा सा प्रथमाऽभिधेया ।
या स्वौजसां साधयितुं विलासैस्तावत्क्षमानामपदं बहु स्यात् ॥ ३।२३॥

प्रसङ्गः—भैम्याः काननं सम्प्राप्तः साम्प्रतं राजहंसो रहसि दमयन्त्याः मानसे नलं प्रति समाकर्षणं समुत्पादनाय नैकविधप्रकारेण नरपतिपुङ्गवस्य नलस्य प्रशंसाम् उपभैमि विदधाति ।

अन्वयः—साधुविभक्तिचिन्ता क्रियेत चेत्, सा व्यक्तिः प्रथमा अभिधेया, या स्वौजसां विलासैः तावत् बहु अनामपदम् ( पक्षान्तरे—नामपदं ) साधयितुं क्षमा स्यात् ।

व्याख्या—साधुविभक्तिचिन्ता=सज्जनविभागविचारः ( पक्षान्तरे—सप्तविभक्तिविचारः ) क्रियेत चेत्=विधीयेत यदि, सा=नलनामधेया ( पक्षा०—प्रथिता ) व्यक्तिः=मूर्तिः ( पक्षा०—विभक्तिः ) प्रथमाऽभिधेया=प्रथमं परिगणनीया ( पक्षा०—प्रथमा=प्रथमाऽऽख्या, अभिधेया=कथनीया ) या=नलनामधेया व्यक्तिः ( पक्षा०—प्रथमाविभक्तिः ) स्वौजसां=निजतेजसां ( पक्षा०—सु-औ-जस्-इत्येतेषां प्रत्ययानां ) विलासैः=विभवैः, ( पक्षा०—विस्तारैः ) बहु=प्रचुरम् ( पक्षा०—अनेकम् ) अनामपदं=परराष्ट्रम्, ( पक्षा०—नामपदं=सुबन्तपदम्, राम इत्यादिकं पदम्-इत्याशयः ) साधयितुं =स्वायत्तीकर्तुम्, ( पक्षा०—निष्पादयितुं ) क्षमा=समर्था, स्यात्=भवेत् । अस्मिन् श्लोके श्लेषालङ्कारः, उपजाति वृत्तञ्चास्ति ।

समासः—साधूनां विभक्तिः ( विभागः ), तस्याश्चिन्ता, साधुविभक्तिचिन्ता । अथवा विभक्तीनां चिन्ता, साधु ( यथा तथा ) विभक्तिचिन्ता, साधुविभक्तिचिन्ता । प्रथमम् ( यथा तथा ) अभिधेया प्रथमाऽभिधेया । स्वस्य ओजांसि ( तेजांसि ) तेषाम् स्वौजसाम् । अथवा सुश्च औ च जसश्च स्वौजसः, तेषां स्वौजसाम् । नमनं नामः, अविद्यमानः नामः येषां ते अनामाः, अनामानां पदं, तत् अनामपदम् । अथवा नाम च तत्पदं, तत् नामपदम् ।

( १७९ ) दारिद्र्यदारिद्रविणौघवर्षैरमोघमेघव्रतमर्थिसार्थे ।
सन्तुष्टमिष्टानि तमिष्टदेवं नाथन्ति के नाम न लोकनाथम्॥
३।२५॥

प्रसङ्गः—द्रष्टव्यम्, श्लो० १७८ ।

अन्वयः—दारिद्र्यदारिद्रविणौघवर्षैः अर्थिसार्थे अमोधमेघव्रतं सन्तुष्टम् इष्टदेवं लोकनाथं तं के नाम इष्टानि न नाथन्ति ? ।

व्याख्या—दारिद्र्यदारिद्रविणौघवर्षैः=दैन्यनिवर्तकधनराशिवर्षणैः, अर्थिसार्थे=याचकव्राते विषये, अमोघमेघव्रतम्=सफलवारिदव्रतं, सन्तुष्टं=दानहृष्टं, इष्टदेवं=यागसमाराधितसुरं, लोकनाथं=महीपतिं, तं=पूर्वोक्तं नलं, के नाम=के जनाः, इष्टानि=अभीष्टवस्तूनि, न=नहि, नाथन्ति=याचन्ते, सर्वेऽपि याचन्त एवेत्याशयः । अस्मिन् श्लोके उपमालङ्कारः, उपजाति वृत्तश्च विद्येते ।

समासः—दारिद्र्यं दारयतीति दारिद्र्यदारी, द्रविणानाम् ओघः, दारिद्र्यदारी चाऽसौ द्रविणौघः, तस्य वर्षाणि, तैः दारिद्र्यदारिद्रविणौघवर्षैः । अर्थिनां सार्थः, तस्मिन् अर्थिसार्थे । न मोघम् अमोघम्, मेघस्य व्रतम्, अमोघं मेघव्रतं यस्य सः, तम् अमोघमेघव्रतम् । इष्टा देवा येन सः, तम् इष्टदेवम् । लोकानां नाथः तम् लोकनाथम् ।

( १८० ) स्वर्लोकमस्माभिरितः प्रयातैः
केलीषु तद्गानगुणान्निपीय ।
हा हेति गायन्यदशोचि तेन
नाम्नैव हाहा हरिगायनोऽभूत् ॥ ३।२७॥

प्रसङ्गः—द्रष्टव्यम्, श्लो० १७८ ।

अन्वयः—केलीषु तद्गानगुणान् निपीय इतः स्वर्लोकं प्रयातैः अस्माभिः हरिगायनः गायन् यत् 'हा ! हा !' इति अशोचि, ततः नाम्ना हाहा अभूत् ।

व्याख्या—केलीषु=विनोदगोष्ठीषु, तद्गानगुणान्=नलगीतमाधुर्यादिगुणान्, निपीथ=नितरामास्वाद्य, सादरमाकर्ण्येत्याशयः, इतः=अस्माल्लोकात्, भूलोकादित्याशयः, स्वर्लोकं=नाकलोकं, प्रयातैः=समासादितैः, अस्माभिः=हंसैः, हरिगायनः=पुरन्दरगायकः, गायन्=गानं कुर्वन् सन्, यत्=यस्माद्धेतोः, हा हा इति अशोचि=हा हा इति शोकविषयीकृतः, नलगानाऽपेक्षया निकृष्ट-

गानत्वादित्याशयः, ततः=तस्माद्धेतोः, नाम्ना=संज्ञया, हाहा=हाहा इत्येवं-प्रकारकः, अभूत्=अभवत्। अतिशयोक्तिरलङ्कारोऽत्र, उपजाति वृत्तञ्च।

समासः—तस्य गानं, तद्गानस्य गुणाः, तान् तद्गानगुणान्। गायतीति गायनः, हरेर्गायनः हरिगायनः।

(१८१) शृण्वन्सदारस्तदुदारभावं हृष्यन्मुहुर्लोम पुलोमजायाः।
पुण्येन नालोकत नाकपालः प्रमोदबाष्पाऽऽवृतनेत्रमालः॥
३।२८॥

प्रसङ्गः—द्रष्टव्यम्, श्लो० १७८।

अन्वयः—नाकपालः सदारः तदुदारभावं शृण्वन् प्रमोदबाष्पावृतनेत्रमालः (सन्) पुलोमजायाः मुहुः हृष्यत् लोम पुण्येन न आलोकत।

व्याख्या—नाकपालः=स्वर्गाधिपतिः शक्रः, सदारः=सपत्नीकः, तदुदार-भावं=नलौदार्यं, शृण्वन्=आकर्णयन्, प्रमोदबाष्पाऽऽवृतनेत्रमालः=आनन्द-बाष्पसमाच्छादितलोचनसमूहः सन्, पुलोमजायाः=इन्द्राण्याः, मुहुः=असकृत्, हृष्यत्=उल्लसत्, नलाऽनुरागादित्याशयः, लोम=रोम, रोमाञ्चमिति भावः, पुण्येन=सुकृतेन, इन्द्राण्याः भागधेयेनेत्याशयः, न=नहि, आलोकत=अपश्यत, अन्यथा इन्द्राण्याः मानसव्यभिचारं जानीयादित्याशयः। भावोदयालङ्कारोऽत्र, उपजाति वृत्तम्।

समासः—नाकं पालयतीति नाकपालः। दारैः सहितः सदारः। उदार-श्चासौ भावः, तस्य उदारभावः, तम् तदुदारभावम्। प्रमोदस्य बाष्पाणि, तैः वृताः, नेत्राणां माला, प्रमोदबाष्पावृता नेत्रमाला यस्य सः प्रमोदबाष्पावृतनेत्र-मालः। पुलोम्नो जाता, तस्याः पुलोमजायाः।

(१८२) साऽपीश्वरे शृण्वति तद्गुणौघान् प्रसह्य चेतो हरतोऽर्धशम्भुः।
अभूदपर्णाऽङ्गुलिरुद्धकर्णा कदा न कण्डूयनकैतवेन ?॥
३।२९॥

प्रसङ्गः—द्रष्टव्यम्, श्लो० १७८।

अन्वयः—ईश्वरे प्रसह्य चेतः हरतः तद्गुणौघान् शृण्वति (सति) सा अर्धशम्भुः अपर्णा कदा कण्डूयनकैतवेन अङ्गुलिरुद्धकर्णा न अभूत्?।

व्याख्या—ईश्वरे=हरे, प्रसह्य=बलात्, चेतः=मानसं, हरतः=आक-र्षतः, तद्गुणौघान्=नलगुणनिवहान्, शृण्वति=आकर्णयति सति, सा=प्रथिता, अर्धशम्भुः=शङ्करस्यार्धाङ्गभूता, अपर्णा=गिरिराजसुता, कदा=

कस्मिन् समये, कण्डूयनकैतवेन=कण्डूनिवारणमिषेण, अङ्गुलिरुद्धकर्णा=करशाखापिहितश्रवणा, न अभूत्=नाभवत्, अभूदेवेत्याशयः। व्याजोक्तिरलङ्कारोऽत्र, उपजाति वृत्तञ्च।

समासः—हरन्तीति हरन्तः, तान् हरतः। गुणानाम् ओघाः, तस्य गुणौघाः तान् तद्गुणौघान्। अर्धं ( शरीरार्धम् ) शम्भोः, अर्धशम्भुः। अविद्यमानं पर्णं यस्याः सा अपर्णा। कण्डूयनस्य कैतवं, तेन कण्डूयनकैतवेन। रुद्धौ कर्णौ यया सा, अङ्गुलिभ्यां रुद्धकर्णा अङ्गुलिरुद्धकर्णा।

( १८३ ) अलं सजन्धर्मविधौ विधाता
रुणद्धि मौनस्य मिषेण वाणीम्।
तत्कण्ठमालिङ्ग्य रसस्य तृप्तां
न वेद तां वेदजडः स वक्राम् ॥३।३०॥

प्रसङ्गः—द्रष्टव्यम्, श्लो० १७८।

अन्वयः—विधाता धर्मविधौ अलं सजन् वाणीं मौनस्य मिषेण रुणद्धि, ( किन्तु ) वेदजडः स ताम् तत्कण्ठम् आलिङ्ग्य रसस्य तृप्तां वक्रां न वेद।

व्याख्या—विधाता=विधिः, धर्मविधौ=सुकृताचरणे, अलम्=अत्यर्थम्, सजन्=धर्मासक्तः सन्, वाणीं=स्ववनितां सरस्वतीं, वर्णात्मिकां वाचं च, मौनस्य=वाग्यमनव्रतस्य, मिषेण=व्याजेन, रुणद्धि=निवारयति, नलकथाप्रसङ्गादिति शेषः, तस्या उभय्या अपि नलाऽऽशक्तिभयादिति भावः, ( किन्तु ) वेदजडः=श्रुतिजडः, वेदपाठमात्रनिरतत्वाद्विचारहीन इत्याशयः, सः=प्रजापतिः, तां=वाणीं, निजभार्य्यां वाचं चेत्युभयीमपि, तत्कण्ठं=नलगलम्, आलिङ्ग्य=आश्लिष्य, रसस्य तृप्तां=अनुरागसन्तुष्टां, शृङ्गारादिरससन्तुष्टाञ्च, (अतएव) वक्रां=प्रतिकूलां, वक्रोक्त्यलङ्कारान्विताञ्च, न वेद=नावगच्छति, स्त्रीणां रक्षा दुःशकेति भावः। अत्र प्रस्तुतवाग्देवीकथनादप्रस्तुतवर्णात्मकवाणीवृत्तान्तप्रतीते समासोक्तिरलङ्कारः, उपजाति वृत्तञ्च।

समासः—धर्मस्य विधिः, तस्मिन् धर्मविधौ। वेदेन जडः वेदजडः। तस्य कण्ठः, तम् तत्कण्ठम्।

( १८४ ) श्रियस्तदालिङ्गनभूर्न भूता व्रतक्षतिः काऽपि पतिव्रतायाः।
समस्तभूतात्मतया न भूतं तद्भर्तुरीर्ष्याकलुषाऽणुनाऽपि ॥
३।३१॥

प्रसङ्गः—द्रष्टव्यम्, श्लो० १७८।

**अन्वय:**—पतिव्रतायाः श्रियः तद्भर्तुः समस्तभूतात्मतया तदालिङ्गनभूः काऽपि व्रतक्षतिः न अभूत्, ( अत एव ) तद्भर्तुः ईर्ष्याकलुषाऽणुना अपि न भूतम् ।

**व्याख्या**—पतिव्रतायाः=सत्याः, श्रियः=लक्ष्म्याः, तद्भर्तुः=रमापतेः, विष्णोरित्याशयः, समस्तभूतात्मतया=सर्वभूतात्मकत्वेन, नलस्यापि विष्णुरूपत्वेनेति भावः, तदालिङ्गनभूः=नलाऽऽश्लेषभवा, काऽपि=काचिदपि, व्रतक्षतिः पातिव्रत्यभङ्गः, न अभूत्=न अजायत, (अत एव) तद्भर्तुः=श्रीपतेः विष्णोः, ईर्ष्याकलुषाऽणुना अपि=असहिष्णुताकालुष्यलेशेनापि, न भूतम्=नाभावि । पदार्थहेतुकं काव्यलिङ्गमलङ्कारोऽत्र, उपजाति वृत्तञ्च ।

**समासः**—पत्यौ व्रतं यस्याः सा पतिव्रता, तस्या पतिव्रतायाः । तस्याः भर्ता, तस्य तद्भर्तुः । समस्ताश्च ते भूताः, आत्मनो भाव आत्मता, समस्तभूतानाम् आत्मता, तया समस्तभूतात्मतया । तस्य ( नलस्य ) आलिङ्गनम्, तदालिङ्गनात् भवतीति तदालिङ्गनभूः । व्रतस्य क्षति व्रतक्षतिः । ईर्ष्यया कलुषं, तस्य अणुः, तेन ईर्ष्याकलुषाऽणुना ।

( १८५ ) निलीयते ह्रीविधुरः स्वजैत्रं श्रुत्वा विधुस्तस्य मुखं मुखान्नः ।
सूरे समुद्रस्य कदाऽपि पूरे कदाचिदभ्रभ्रमदभ्रगर्भे । ३।३३॥

**प्रसङ्गः**—द्रष्टव्यम्, श्लो० १७८ ।

**अन्वयः**—विधुः स्वजैत्रं तस्य मुखं नः मुखात् श्रुत्वा ह्रीविधुरः ( सन् ) कदाऽपि सूरे कदापि समुद्रस्य पूरे कदाचित् अभ्रभ्रमदभ्रगर्भे निलीयते ।

**व्याख्या**—विधुः=इन्दुः, स्वजैत्रं=निजजेतृ, तस्य=भूपतेः नलस्य, मुखं आननं, नः=अस्माकं, मुखात्=लपनात्, श्रुत्वा=समाकर्ण्य, ह्रीविधुरः=त्रपासमाकुलः सन्, कदाऽपि=कदाचित्, सूरे=भास्करे, दर्शे इत्याशयः, कदापि=कदाचित्, समुद्रस्य=पारावारस्य, पूरे=प्रवाहे, अस्तकाल इति भावः, कदाचित्=जातुचित्, अभ्रभ्रमदभ्रगर्भे=गगनसञ्चरमाणवारिदाऽभ्यन्तरे, निलीयते=अन्तर्धत्ते । प्रतीयमानोत्प्रेक्षालङ्कारोऽत्र, उपजाति वृत्तम् ।

**समासः**—जयतीति जेतृ, जेतृ एव जैत्रम्, स्वस्य जैत्रं, तत् स्वजैत्रं । ह्रिया विधुरः ह्रीविधुरः । भ्रमच्च तत् अभ्रम्, अभ्रे भ्रमदभ्रम्, अभ्रभ्रमदभ्रस्य गर्भः, तस्मिन् अभ्रभ्रमदभ्रगर्भे ।

( १८६ ) श्रियौ नरेन्द्रस्य निरीक्ष्य तस्य
स्मराऽमरेन्द्रावपि न स्मरामः।
वासेन सम्यक् क्षमयोश्च तस्मिन्
बुद्धौ न दध्मः खलु शेषबुद्धौ ॥३।३६॥

**प्रसङ्गः**—द्रष्टव्यम्, श्लो० १७८।

**अन्वयः**—तस्य नरेन्द्रस्य श्रियौ निरीक्ष्य स्मराऽमरेन्द्रौ अपि न स्मरामः, तस्मिन् क्षमयोः सम्यक् वासेन बुद्धौ शेषबुद्धौ न दध्मः खलु।

**व्याख्या**—तस्य=पूर्वनिगदितस्य, नरेन्द्रस्य=नरपतेः नलस्य, श्रियौ=सौन्दर्यसम्पत्ती, निरीक्ष्य=विलोक्य, स्मरामरेन्द्रौ अपि=मन्मथपुरन्दरौ अपि, न=नहि, स्मरामः=चिन्तयामः, स्मरे सौन्दर्यमेव न सम्पत्तिः, शक्रे सम्पत्तिरेव न सौन्दर्यम्, राज्ञि नले च द्विविधे अपि श्रियौ विद्येते, अतस्तस्य आधिक्यमित्याशयः। एवं च, तस्मिन्=राज्ञि नले, क्षमयोः=क्षितिक्षान्त्योः, सम्यक्=साधु, वासेन=स्थित्या, बुद्धौ=निजधिषणायां, शेषबुद्धौ=अनन्तसुगतौ, न=नहि, दध्मः=धारयामः, खलु=निश्चयेन। शेषः क्षितिमेव सन्धारयति न क्षान्ति, सुगतः क्षान्तिमेव धारयति न पुनः क्षितिम्। भूपतिः नलस्तु उभे अपि स्वस्मिन् सन्धारयति, एतावता तस्य प्रकर्षाऽतिशयेत्याशयः। अस्मिन् श्लोके श्लेष-व्यतिरेक-यथासंख्यालङ्काराणां सङ्करः। उपजातिवृत्तम्।

**समासः**—नराणाम् इन्द्रः, तस्य नरेन्द्रस्य। श्रीश्च श्रीश्च श्रियौ, ते श्रियौ। अमराणाम् इन्द्रः, स्मरश्च अमरेन्द्रश्च, तौ स्मराऽमरेन्द्रौ। क्षमा च क्षमा च क्षमे, तयोः क्षमयोः। शेषश्च बुद्धश्च, तौ शेषबुद्धौ।

( १८७ ) विना पतत्रं विनतातनूजैः समीरणैरीक्षणलक्षणीयैः।
मनोभिरासीदनणुप्रमाणैर्न निर्जिता दिक्कतमा तदश्वैः॥
३।३७॥

**प्रसङ्गः**—द्रष्टव्यम्, श्लो० १७८।

**अन्वयः**—पतत्रं विना विनतातनूजैः ईक्षणलक्षणीयैः समीरणैः अनणुप्रमाणैः मनोभिः तदश्वैः कतमा दिक् न निर्जिता आसीत्।

**व्याख्या**—पतत्रं=पक्षं, विना=अन्तरेण, विनतातनूजैः=पन्नगाशनैः, ईक्षणलक्षणीयैः=लोचनदर्शनीयैः, समीरणैः=पवनैः, अनणुप्रमाणैः=अणुपरिमाणरहितैः, मनोभिः=अन्तःकरणैः, कतया=का, दिक्=काष्ठा, न=नहि, निर्जिता=अतिक्रान्ता, आसीत्=अभवत्। सर्वाऽपि दिक् लङ्घितैवासीदित्या-

शय: । अत्राश्वानां विशिष्टवैनतेयादित्वेन निरूपणाद्रूपकालङ्कार: । उपजाति वृत्तम् ।

**समास:**—विनतायास्तनूजा:, तै: विनतातनूजै: । ईक्षणाभ्यां लक्षणीया:, तै: ईक्षणलक्षणीयै: । अणु: प्रमाणं येषां तानि, न अणुप्रमाणानि, तै: अनणु-प्रमाणै: । तस्य अश्वा:, तै: तदश्वै: ।

( १८८ ) सङ्ग्रामभूमीषु भवत्यरीणामस्त्रैर्नदीमातृकतां गतासु ।
तद्बाणधारापवनाऽशनानां राजव्रजीयैरसुभि: सुभिक्षम् ॥ ३।३८॥

**प्रसङ्ग:**—द्रष्टव्यम्, श्लो० १७८ ।

**अन्वय:**—अरीणाम् अस्त्रै: नदीमातृकतां गतासु संग्रामभूमीषु तद्बाणधारा-पवनाऽशनानां राजव्रजीयै: असुभि: सुभिक्षं भवति ।

**व्याख्या**—अरीणाम्=रिपूणाम्, नलस्येति शेष:, अस्त्रै:=शोणितै:, नदी-मातृकतां=नद्यम्बुसम्पन्नशस्याढ्यतां, गतासु=प्राप्तासु, संग्रामभूमीषु=रण-क्षेत्रेषु, तद्बाणधारापवनाशनानां=नलशरपरम्पराभुजगानां, राजव्रतीयै:—भूपतिसमूहसम्बन्धिभि:, असुभि:=प्राणै:, सुभिक्षं=भिक्षाणां समृद्धि:, भवति =विद्यते । अस्मिन् श्लोके रूपकालङ्कार:, उपजातिवृत्तश्च विद्येते ।

**समास:**—नदी एव माता यासां ता नदीमातृका:; नदीमातृकाणां भावो नदीमातृकता, तां नदीमातृकताम् । संग्रामस्य भूम्य:, तासु संग्रामभूमीषु । बाणानां धारा:, तस्य बाणधारा:, ता एव पवनाऽशना:, तेषां तद्बाणधारा-पवनाऽशनानाम् । राज्ञां व्रजा:, राजव्रजानाम् इमे राजव्रजीया:, तै: राजव्रजीयै:। भिक्षाणां समृद्धि: सुभिक्षम् ।

( १८९ ) यशो यदस्याऽजनि संयुगेषु कण्डूलभावं भजता भुजेन ।
हेतोर्गुणादेव दिगापगालीकूलङ्कषत्वं व्यसनं तदीयम् ॥ ३।३९॥

**प्रसङ्ग:**—द्रष्टव्यम्, श्लो० १७८ ।

**अन्वय:**—संयुगेषु कण्डूलभावं भजता अस्य भुजेन यत् यश: अजनि, तदीयं दिगापगालीकूलङ्कषत्वं व्यसनं हेतो: गुणात् एव ।

**व्याख्या**—संयुगेषु=रणेषु, कण्डूलभावं=कण्डूलत्वं, खर्जूं वा, भजता= प्राप्नुवता, अस्य=नरपते: नलस्य, भुजेन=बाहुना, यत्, यश:=कीर्ति:, अजनि=जनितं, तदीयं=तद्यश:सम्बन्धि, दिगापगालीकूलङ्कषत्वं=काष्ठा-

नदीराजितटघर्षकत्वं, व्यसनम्=आसक्तिः, हेतोः=कारणस्य, भुजस्येतिशेषः, गुणात् एव=कण्डूलत्वात् एव आगतमिति शेषः। उत्प्रेक्षालङ्कारोऽत्र, उपजातिवृत्तञ्च ।

**समासः**—कण्डूरस्याऽस्तीति कण्डूलः, कण्डूलस्य भावः, तम् कण्डूलभावम् । तस्य इयं तदीयम् । दिश एव आपगाः, तासाम् आली, कूलं कषतीति कूलङ्कषं, कूलङ्कषस्य भावः कूलङ्कषत्वम् । दिगापगाल्याः कूलङ्कषत्वम् दिगापगालीकूलङ्कषत्वम् ।

( १९० ) यदि त्रिलोकी गणनापरा स्या-
त्तस्याः समाप्तिर्यदि नायुषः स्यात् ।
पारेपरार्धं गणितं यदि स्याद्
गणेयनिःशेषगुणोऽपि सः स्यात् ॥३।४०॥

**प्रसङ्गः**—द्रष्टव्यम्, श्लो० १७८ ।

**अन्वयः**—त्रिलोकी गणनापरा स्यात् यदि, तस्या आयुषः समाप्तिः न स्यात् यदि, पारेपरार्धं गणितं स्यात् यदि ( तदा ) सः अपि गणेयनिःशेषगुणः स्यात् ।

**व्याख्या**—त्रिलोकी=त्रिभुवनं, गणनापरा=नलगुणसंख्यानदत्तमानसा, स्यात्=भवेत्, यदि=चेत्, एवं च, तस्याः=त्रिभुवनस्य, आयुषः=जीवनकालस्य, समाप्तिः=समापनं, न=नहि, स्यात्=भवेत्, यदि=चेत्, पारेपरार्धं=परार्धात् परं, गणितं=संख्यातं, स्यात् यदि=भवेत् चेत्, ( तदा=तर्हि ) सः अपि=नलः अपि, गणेयनिःशेषगुणः=गणनीयनिखिलगुणः, स्यात्=भवेत्, न तु एवं, ततो नलगुणगणना कर्तुं नैव शक्येति भावः। अतिशयोक्तिरलङ्कारोऽत्र, उपजाति वृत्तम्। चन्द्रालोककारजयदेवमतानुसारेण सम्भावनालङ्कारोऽपि ।

**समासः**—त्रयाणां लोकानां समाहारः त्रिलोकी। गणनायां परा गणनापरा। परार्द्धस्य पारे पारेपरार्धम् ।

( १९१ ) नलाश्रयेण त्रिदिवोपभोगं तवाऽनवाप्यं लभते बतान्या।
कुमुद्वतीवेन्दुपरिग्रहेण ज्योत्स्नोत्सवं दुर्लभमम्बुजिन्या ॥
३।४५॥

**प्रसङ्गः**—प्रियमानसो राजहंसोऽत्र नरपतेः नलस्याभीष्टसंसाधनाय दमयन्त्याः नलाऽनुरागमुद्दीपयति ।

**अन्वयः**—तव अनवाप्यं त्रिदिवोपभोगम् अम्बुजिन्या दुर्लभं ज्योत्स्नोत्सवम् इन्दुपरिग्रहेण कुमुद्वती इव नलाश्रयेण अन्या लभते बत ।

**व्याख्या**—( हे भैमि ! ) तव=भवत्याः, अनवाप्यम्=अप्राप्यं, नलाङ्गीकाराऽभावादित्याशयः । त्रिदिवोपभोगं=स्वर्गोपभोगं, नलस्य पुरन्दरसदृशैश्वर्यत्वादित्याशयः । अम्बुजिन्याः=कमलिन्याः, दुर्लभं=दुरापं, ज्योत्स्नोत्सवं=चन्द्रिकाभोगम्, इन्दुपरिग्रहेण=सुधांशुस्वीकारेण, कुमुद्वती=कुमुदिनी, इव=यथा, नलाश्रयेण=नलाऽङ्गीकारेण, अन्या=अपरा काचिद्वनिता, लभते=अधिगच्छति, बत=खेदस्य विषयोऽयमित्याशयः । अस्मिन् श्लोके उपमालङ्कारः, उपजातिवृत्तञ्च राजेते ।

**समासः**—त्रिदिवस्य उपभोगः, तम् त्रिदिवोपभोगम् । ज्योत्स्नाया उत्सवः, तम् ज्योत्स्नोत्सवम् । इन्दोः परिग्रह, तेन इन्दुपरिग्रहेण । कुमुदानि सन्ति यस्यां सा कुमुद्वती । नलस्य आश्रयः, तेन नलाश्रयेण ।

( १९२ ) तन्नैषधाऽनूढतया दुरापं शर्म त्वयाऽस्मत्कृतचाटुजन्म ।
रसालवल्ल्या मधुपाऽनुविद्धं सौभाग्यमप्राप्त वसन्तयेव ॥
३।४६॥

**प्रसङ्गः**—द्रष्टव्यम्, श्लो० १९१ ।

**अन्वयः**—तत् अस्मत्कृतचाटुजन्म शर्म त्वया अप्राप्तवसन्तया रसालवल्ल्या मधुपाऽनुविद्धं सौभाग्यम् इव नैषधाऽनूढतया दुरापम् ।

**व्याख्या**—तत्=प्रथितम्, अस्मत्कृतचाटुजन्म=मन्निगदितप्रियवाक्योद्भूतं, शर्म=सुखं, त्वया=भवत्या, अप्राप्तवसन्तया=वसन्तानधिष्ठितया, रसालवल्ल्या=आम्रश्रेण्या, मधुपाऽनुविद्धं=द्विरेफविहितं, सौभाग्यम्=सौन्दर्यम्, इव=यथा, नैषधाऽनूढतया=नलेनापरिणीततया, दुरापं=दुर्लभं, एतावता नलपरिग्रहाय भवत्या यत्नः कार्य इत्याशयः । उपमालङ्कारोऽत्र, उपजाति वृत्तञ्च ।

**समासः**—अस्माभिः कृतानि, अस्मत्कृतानि च तानि चाटूनि, तेभ्यो जन्म यस्य तत् अस्मत्कृतचाटुजन्म । न प्राप्तः अप्राप्तः, अप्राप्तो वसन्तो यया सा, तया अप्राप्तवसन्तया । रसालानां वल्ली, तया रसालवल्ल्या । मधु पिबन्तीति मधुपाः, मधुपैः अनुविद्धम् मधुपाऽनुविद्धम् । निषधानामयं नैषधः, अनूढाया भावः अनूढता, नैषधेन अनूढता, तया नैषधाऽनूढतया । दुःखेन आप्तुं शक्यं दुरापम् ।

( १९३ ) निशा शशाङ्कं शिवया गिरीशं
श्रियां हरिं योजयतः प्रतीतः ।
विधेरपि स्वारसिकः प्रयासः
परस्परं योग्यसमागमाय ॥३।४८॥

प्रसङ्गः—प्रियमानसो राजहंसोऽत्र नरपतेः नलस्याभीष्टसंसाधनाय दमयन्त्याः मानसे नलानुरागं समुत्पाद्य पुनर्नलप्राप्त्याशां जनयति ।

अन्वयः—निशा शशाङ्कं, शिवया गिरीशं, श्रिया हरिं योजयतः विधेः प्रयासोऽपि परस्परं योग्यसमागमाय एव स्वारसिकः प्रतीतः ।

व्याख्या—निशा=रात्र्या, शशाङ्कं=सुधांशुं, शिवया=उमया, गिरीशं=शङ्करं, श्रिया=लक्ष्म्या, हरिं=विष्णुं, योजयतः=संयोगं प्रापयतः, विधेः=विधातुः, प्रयासः अपि=प्रयत्नः अपि, परस्परम्=अन्योऽन्यं, योग्यसमागमाय एव=अर्हसंघट्टनाय एव, स्वारसिकः=स्वानुरागप्रवृत्तः, प्रतीतः=प्रथितः, निशाशशाङ्कादिदृष्टान्तादपि विधिसङ्कल्पः सुज्ञेय एव इत्याशयः। अस्मिन् श्लोके समालङ्कारः, 'समं स्यादानुरूप्येण श्लाघा या योग्यवस्तुनोः' (सा. द.) इति लक्षणात् । उपजातिवृत्तञ्च ।

समासः—शशः अङ्कः यस्य सः, तम् शशाङ्कम् । गिरेरीशः, तम् गिरीशम् । योजयतीति योजयन् तस्य योजयतः । योग्या च योग्यश्च योग्यौ, योग्ययोः समागमः, तस्मै योग्यसमागमाय । स्वस्य रसः, स्वरसेन चरतीति स्वारसिकः ।

( १९४ ) अन्येन पत्या त्वयि योजितायां
विज्ञत्वकीर्त्या गतजन्मनो वा ।
जनाऽपवादाऽर्णवमुत्तरीतुं विधा
विधातुः कतमा तरीः स्यात् ? ॥ ३।५१॥

प्रसङ्गः—प्रियमानसो राजहंसोऽत्र नरपतिना नलेन साकं भैम्याः सम्बन्धस्य सम्भावनामभिव्यनक्ति ।

अन्वयः—वा अन्येन पत्या त्वयि योजितायां विज्ञत्वकीर्त्या गतजन्मनः विधातुः जनाऽपवादाऽर्णवम् उत्तरीतुं कतमा विधा तरी स्यात् ।

व्याख्या—वा=अथवा, अन्येन=अपरेण, नलभिन्नेनेति भावः, पत्या=भर्त्रा, त्वयि=भवत्यां, योजितायां=घटितायां सत्यां, विज्ञत्वकीर्त्या=अभिज्ञत्वप्रसिद्ध्या एव, गतजन्मनः=क्षपिताऽऽयुषः, विधातुः=विधेः, जनाऽपवादाऽर्णवं=लोकापवादसागरं, उत्तरीतुं=निस्तरीतुं, कतमा विधा=कः प्रकारः,

तरीः=नौका, स्यात्=भवेत्, न काऽपीत्याशयः। एतावता लोकापवादभीतेरपि ब्रह्मणा त्वं नलेनैव संयोजनीयेति भावः। उपजाति वृत्तमत्र।

समासः—विज्ञस्य भावो विज्ञत्वम्, विज्ञत्वस्य कीर्तिः, तया विज्ञत्वकीर्त्या। गतं जन्म यस्य स गतजन्मा, तस्य गतजन्मनः। जनानाम् अपवादः, जनाऽपवाद एव अर्णवः, तम् जनाऽपवादाऽर्णवम्।

(१९५) आस्तां तदप्रस्तुतचिन्तयाऽलं,
मयाऽसि तन्वि ! श्रमिताऽतिवेलम्।
सोऽहं तदागः परिमार्ष्टुकाम-
स्तवेप्सितं किं विदधेऽभिधेहि ॥३।५२॥

प्रसङ्गः—प्रियमानसो राजहंसोऽत्र भैम्याः मानसाभिप्रायं ज्ञातुं स्वकथनमुपसंहरति।

अन्वयः—तत् आस्ताम्, अप्रस्तुतचिन्तया अलम्। हे तन्वि ! मया अतिवेलं श्रमिता असि। तत् आगः परिमार्ष्टुकामः सोऽहं किं तव ईप्सितं विदधे ? अभिधेहि।

व्याख्या—तत्=पूर्वोक्तं नलवर्णनम्, आस्तां=तिष्ठतु, अप्रस्तुतचिन्तया=अप्रकृतविचारेण, अलं=पर्याप्तम्। हे तन्वि !=भो कृशाङ्गि ! मया=राजहंसेन, अतिवेलं=अतिमात्रं, श्रमिता=खेदिता, असि=विद्यसे, तत्=श्रान्तिरूपम्, आगः=अपराधं, परिमार्ष्टुकामः=परिहर्तुकामः, सः=तादृशः, अहं=अपराद्धा हंसः, किं=केन प्रकारेण, तव=भवत्याः, ईप्सितं=अभीष्टं, विदधे=कुर्वे ? (इति) अभिधेहि=कथय। उपजाति वृत्तमत्र।

समासः—न प्रस्तुतः अप्रस्तुतः, तस्य चिन्ता, तया अप्रस्तुतचिन्तया। परिमार्ष्टुं कामो यस्य सः परिमार्ष्टुकामः।

(१९६) आदर्शतां स्वच्छतया प्रयासि सतां स तावत्खलु दर्शनीयः।
आगः पुरस्कुर्वति सागसं मां यस्यात्मनीदं प्रतिबिम्बितं ते ॥
३।५६॥

प्रसङ्गः—हंसमुखात् नलगुणश्रवणानन्तरं भैमी प्रत्युत्तररूपेण राजहंसस्यात्र प्रशंसां विदधाति।

अन्वयः—स्वच्छतया आदर्शतां प्रयासि, यस्य ते सागसं मां पुरस्कुर्वति आत्मनि इदम् आगः प्रतिबिम्बितम्, स सतां तावत् दर्शनीयः।

व्याख्या—स्वच्छतया=शुभ्रतया, आदर्शतां=दर्पणत्वं, प्रयासि=प्राप्नोषि,

यस्य=निर्मलस्य, ते=तव, साऽऽगसं=अपराधान्वितां, मां=दमयन्तीं, पुरस्कुर्वति=पूजयति, आत्मनि=बुद्धौ, स्वरूपे च, इदं=मदीयं, आगः=अपराधः, प्रतिबिम्बितं=प्रतिफलितं, सः=तादृशः आदर्शः, सतां=सत्पुरुषाणां, तावत्=प्रथमं, दर्शनीयः=अवलोकनीयः, पूज्यश्च । उपजातिवृत्तमत्र ।

समासः—आगसा सहिता साऽऽगा, ताम् सागसं । पुरस्करोतीति पुरस्कुर्वन्, तस्मिन् पुरस्कुर्वति ।

(१९७) अनार्यमत्याचरितं कुमार्या भवान्मम क्षाम्यतु सौम्य ! तावत् ।
हंसोऽपि देवांऽशतयाऽसि वन्द्यः श्रीवत्सलक्ष्मेव हि मत्स्यमूर्तिः ॥ ३।५७॥

प्रसङ्गः—द्रष्टव्यम्, श्लो० १९६ ।

अन्वयः—हे सौम्य ! भवान् कुमार्या मम अनार्यमपि आचरितं तावत् क्षाम्यतु, हंसोऽपि ( त्वम् ) देवांऽशतया मत्स्यमूर्तिः श्रीवत्सलक्ष्मा इव वन्द्यः असि ।

व्याख्या—हे सौम्य !=भो सज्जन !, भवान्=हंसः, कुमार्याः=अपरिणीतायाः, शिशोः, मम=भैम्याः, अनार्यम् अपि=अनुचितमपि, आचरितं=आचरणं, तावत्=प्रथमं, क्षाम्यतु=मर्षणं विदधातु, हंसोऽपि=मरालोऽपि, देवांऽशतया=अमरांऽशतया, मत्स्यमूर्तिः=मीनाऽवतारान्वितः, श्रीवत्सलक्ष्मा=विष्णुः, इव=यथा, वन्द्यः=पूजनीयोऽसि । उपजातिवृत्तमत्र ।

समासः—सोमो देवताऽस्येति सौम्यः, तत्सम्बुद्धौ हे सौम्य ! न आर्यम्, अनार्यम् । देवस्य अंशः, तस्य भावः, तया देवांऽशतया ।

(१९८) मनस्तु यं नोज्झति जातु, यातु मनोरथः कण्ठपथं कथं सः ?
का नाम वाला द्विजराजपाणिग्रहाऽभिलाषं कथयेदभिज्ञा ? ॥ ३।५९॥

प्रसङ्गः—हंसेन बहुशः समुद्बोधिता भैमी श्लेषालङ्कारमाध्यमेन स्वाभिलाषं हंसं प्रति प्रकटयत्यत्र ।

अन्वयः—मनः यं जातु न उज्झति, स मनोरथः कण्ठपथं कथं यातु ? अभिज्ञा का नाम वाला द्विजराजपाणिग्रहाभिलाषं कथयेत् ? अथवा हे द्विज ! अभिज्ञा का नाम वाला राजपाणिग्रहाभिलाषं कथयेत् ?

व्याख्या—मनः=मन्मानसं, यं=अभीष्टं, जातु=कदाचिदपि, न=नहि, उज्झति=परित्यजति, स=तादृशः, मनोरथः=अभिलाषः, कण्ठपथं=गल-

मार्गं, कथं=केन प्रकारेण, यातु=प्राप्नोतु ? यतः-अभिज्ञा=विवेकान्विता, का नाम बाला=का नाम वनिता, द्विजराजपणिग्रहाऽभिलाषं=शशिकरग्रहण-मनोरथं, कथयेत्=ब्रूयात् ? अथवा हे द्विज=हे पक्षिन् !, अभिज्ञा का नाम बाला, राजपाणिग्रहाऽभिलाषं=नलपाणिग्रहणाभीष्टं, कथयेत्=ब्रूयात् ? दुष्प्राप्यजनाऽभिलाषश्चन्द्रपाणिग्रहणसदृशः उपहासस्थानभूतः सन् लज्जावत्या कुमार्या कथं वक्तुं शक्य इत्याशयः। श्लेषाऽलङ्कारोऽत्र, उपजातिवृत्तञ्च।

समासः—कण्ठस्य पन्थाः कण्ठपथः, तं कण्ठपथम्। द्विजानां राजा द्विज-राजः, तस्य पाणिः, तेन ग्रहः, तस्मिन् अभिलाषः, तम् द्विजराजपाणिग्रहाऽभि-लाषम्। अथवा राज्ञः पाणिग्रहः, तस्मिन् अभिलाषः, तम् राजपाणिग्रहाऽभि-लाषम्।

(१९९) पर्यंङ्कताऽऽपन्नसरस्वदङ्कां लङ्कापुरीमप्यभिलाषि चित्तम्।
कुत्राऽपि चेद्वस्तुनि ते प्रयाति तदप्यवेहि स्वशये शयालुः॥
३।६६॥

प्रसङ्गः—नरपतिं नलं प्रति भैम्याः मानसे बहुशोऽनुरागं समुत्पाद्य भूयः तच्चित्तगतं भावं जिज्ञासुः सन् हंसोऽत्र 'यद्यत् त्वमभिलषसि तत्तत् सर्वमहं साधयिष्यामी'त्येवंरूपेण प्रतिजानाति।

अन्वयः—कुत्र अपि वस्तुनि अभिलाषि ते चित्तं पर्यंङ्कतापन्नसरस्वदङ्कां लङ्कापुरीम् अपि प्रयाति चेत्, तत् अपि स्वशये शयालुः अवेहि।

व्याख्या—कुत्र अपि=कस्मिन् अपि, वस्तुनि=पदार्थे, अभिलाषि=अभिलाषान्वितं, ते=तव, चित्तं=हृदयं, (कर्तृ) पर्यंङ्कतापन्नसरस्वदङ्कां =मञ्चत्वाधिगतसागरचिह्नां, लङ्कापुरीम् अपि=सिंहलद्वीपनगरीम् अपि, प्रयाति चेत्=व्रजति यदि, तत्=वस्तु, अपि, स्वशये=निजपाणौ, शयालुः= स्थितम्, अवेहि=जानीहि। उपजातिवृत्तमत्र।

समासः—पर्यंङ्कस्य भावः पर्यंङ्कता, पर्यंङ्कताम् आपन्नः, पर्यंङ्कतापन्नः; सरस्वान् अङ्को यस्याः सा, ताम् पर्यंङ्कतापन्नसरस्वदङ्काम्। लङ्का चाऽसौ पुरी, ताम् लङ्कापुरीम्। स्वस्य शयः, तस्मिन् स्वशये।

(२००) इतीरिता पत्त्ररथेन तेन ह्रीणा च हृष्टा च बभाण भैमी।
चेतो नलङ्कामयते मदीयं, नाऽन्यत्र कुत्रापि च साऽभिलाषम्॥
३।६७॥

प्रसङ्गः—'यद्यत् त्वं वाञ्छसि तत्तत् सर्वं विधास्यामि' इत्येवं रूपेण

हंसेन प्रतिज्ञापिते सति प्रसन्नवदना भैमी 'मदीयं चेतो लङ्कां न अयते प्रत्युत नलं कामयते' इति श्लेषमाध्यमेन स्वाभीष्टं हंसं प्रति निगदत्यत्र ।

अन्वयः—तेन पत्त्ररथेन इति ईरिता भैमी ह्रीणा हृष्टा च (सती बभाण–'मदीयं चेतो लङ्कां न अयते ( पक्षान्तरे—मदीयं चेतो नलं कामयते ) । अन्यत्र कुत्र अपि साऽभिलाषं न ।'

व्याख्या—तेन=पूर्वनिगदितेन, पत्त्ररथेन=पक्षिणा हंसेन, इति=इत्थं, ईरिता=कथिता, भैमी=विदर्भराजपुत्री, ह्रीणा=त्रपान्विता, हृष्टा च=प्रसन्ना च, ( सती ) बभाण=उवाच । मदीयं=मामकीनं, चेतः=मानसं, लङ्कां=सिंहलद्वीपपुरीं, न=नहि, अयते=व्रजति ( पक्षान्तरे—नलं=नैषधं, कामयते=वाञ्छति ) अन्यत्र=अन्यस्मिन्, कुत्र अपि=कस्मिन्, अपि, वस्तुनीति शेषः, साऽभिलाषं=वाञ्छायुतं, न=नास्ति । अस्मिन् श्लोके श्लेषालङ्कारः, उपजातिवृत्तञ्च विद्येते ।

समासः—पत्त्रं रथो यस्य सः, तेन पत्त्ररथेन । अभिलाषेण सहितम् साऽभिलाषम् ।

(२०१) साधु त्वयाऽतर्कि तदेकमेव स्वेनाऽनलं यत्किल संश्रयिष्ये ।
विनाऽमुना स्वात्मनि तु प्रहर्तुं मृषागिरं त्वां नृपतौ न कर्तुम् ॥
३।७७।

प्रसङ्गः—विदर्भराजपुत्री दमयन्ती हंसं प्रत्यत्र राज्ञि नले स्वकीयं दृढानुरागं प्रतिपादयति ।

अन्वयः—स्वेन अनलं संश्रयिष्ये ( इति ) यत् त्वया अतर्कि तत् एकम् एव साधु अतर्कि । तु अमुना विना स्वात्मनि प्रहर्तुम् (अनलं संश्रयिष्ये) नृपतौ त्वां मृषागिरं कर्तुम् अनलं न संश्रयिष्ये ।

व्याख्या—( भो राजहंस ! ) स्वेन=निजेच्छया, अनलं=नलाद्भिन्नं, संश्रयिष्ये=आश्रयिष्ये, ( इति ) यत्, त्वया=भवता हंसेन, अतर्कि=ऊहितं, तत्, एकम्, एव, साधु=समीचीनम्, अतर्कि=तर्कितं, तु=किन्तु, अमुना विना=नरपतिना नलेन विना, स्वात्मनि=निजदेहे, प्रहर्तुं=हिंसितुम्, ( अनलं वह्निं, संश्रयिष्ये=आश्रयिष्ये ) नृपतौ=राज्ञि नले विषये, त्वां=भवन्तं, मृषागिरम्=मिथ्यावाचम्, कर्तुं=विधातुं, अनलं=नलेतरं, न संश्रयिष्ये=न आश्रयिष्ये, नलाऽभावे प्राणांस्त्यक्ष्यामीत्याशयः । उपजातिवृत्तमत्र ।

समासः—न नलः, तम् अनलम् । स्वस्य आत्मा, तस्मिन् स्वात्मनि। नृणां पतिः, तस्मिन् नृपतौ । मृषा गीर्यस्य स मृषागीः, तम् मृषागिरम् ।

(२०२) अनैषधायैव जुहोति किं मां तातः कृशानौ न शरीरशेषाम् ।
ईष्टे तनूजन्मतनोस्तथापि मत्प्राणनाथस्तु नलः स एव ॥
३।७१॥

प्रसङ्गः—द्रष्टव्यम्, श्लो० २०१ ।

अन्वयः—तातः माम् अनैषधाय एव जुहोति ? (तदा) शरीरशेषां (माम्) कृशानौ न जुहोति किम् ? स तनूजन्मतनोः ईष्टे, मत्प्राणनाथस्तु नल एव ।

व्याख्या—तातः=मम जनकः, माम्=तनयाम्, अनैषधाय एव=नलेतराय एव, अनलाय सम्प्रदानभूताय एव, जुहोति=ददाति ? (काकुः) (तदा) शरीरशेषां=देहमात्राऽवशिष्टां, मृतामित्याशयः, कृशानौ=वह्नौ, न जुहोति किम् ?=हवनं न विदधाति किम् ? सः=तातः, तनूजन्मतनोः=आत्मजाशरीरस्य, इष्टे=ईशः (स्वामी) भवतीत्याशयः । परं, मत्प्राणनाथस्तु=मज्जीवनस्वामी तु, नल एव=नैषध एव । अतो मयि अविश्वासं मा कार्षीरित्याशयः । उपजातिवृत्तमत्र ।

समासः—न नैषधः, तस्मै अनैषधाय । शरीरम् एव शेषो यस्याः सा ताम् शरीरशेषाम् । तन्वा जन्म यस्याः सा तनूजन्मा तस्याः तनुः, तस्याः तनूजन्मतनोः । मम प्राणाः, तेषां नाथः, मत्प्राणनाथः ।

(२०३) तदेकदासीत्वपदादुदग्रे मदीप्सिते साधु विधित्सुता ते ।
अहेलिना किं नलिनी विधत्ते सुधाऽऽकरेणाऽपि सुधाकरेण ॥
३।८०॥

प्रसङ्गः—द्रष्टव्यम्, श्लो० २०१ ।

अन्वयः—(हे हंस !) तदेकदासीत्वपदात् उदग्रे मदीप्सिते ते विधित्सुता साधु । नलिनी सुधाऽऽकरेण अपि अहेलिना सुधाकरेण किं विधत्ते ?

व्याख्या—(हे हंस !) तदेकदासीत्वपदात्=नलैकसेविकात्वाऽधिकारात्, उदग्रे=उन्नते, मदीप्सिते=मदभीष्टे, नलपत्नीत्वरूप इत्याशयः, तव=भवतः, विधित्सुता=चिकीर्षुता, साधु=उचितम् । नलिनी=कमलिनी, सुधाऽऽकरेण अपि=पीयूषाऽऽधारेण अपि, अहेलिना=सूर्यभिन्नेन, सुधाकरेण=इन्दुना, किं

विधत्ते=किं विदधाति ? यथा नलिन्याश्चन्द्रमसा तथैव ममाऽपि नलभिन्नेन यूना न प्रयोजनमित्याशयः। दृष्टान्तालङ्कारोऽत्र, उपजातिवृत्तञ्च।

समासः—एका चाऽसौ दासी, तस्य एकदासी, तस्याः भावः तदेकदासीत्वम्, तदेव पदं, तस्मात् तदेकदासीत्वपदात्। मम ईप्सितं, तस्मिन् मदीप्सिते। विधातुमिच्छुः विधित्सुः, विधित्सोर्भावः विधित्सुता। सुधाया आकरः, तेन सुधाकरेण। न हेलिः अहेलिः, तेन अहेलिना।

(२०४) तदेकलुब्धे हृदि मेऽस्ति लब्धुं चिन्ता न चिन्तामणिमप्यनर्घम्।
वित्ते ममैकः स नलस्त्रिलोकीसारो निधिः पद्ममुखः स एव॥
३।८१॥

प्रसङ्गः—द्रष्टव्यम्, श्लो० २०१।

अन्वयः—तदेकलुब्धे मे हृदि अनर्घं चिन्तामणिम् अपि लब्धुं चिन्ता न अस्ति, (तथा) वित्ते अपि मम स नलः त्रिलोकीसारः पद्ममुखः एकः एव।

व्याख्या—तदेकलुब्धे=नैषधैकलोलुपे, मे=मम दमयन्त्याः, हृदि=मानसे, अनर्घम्=बहुमूल्यम्, चिन्तामणिम् अपि=चिन्तामणिनामकं रत्नम् अपि, लब्धुं=अधिगन्तुं, चिन्ता=विचारः, न अस्ति=न विद्यते, (तथा) वित्ते अपि=धने अपि, मम=भैम्याः, सः=पूर्वनिगदितः, नलः=नैषधः, त्रिलोकीसारः=त्रैलोक्यश्रेष्ठः, पद्ममुखः=कमलाननः, पद्मनिधिश्च, एकः=प्रमुखः, एव=निश्चयेन। नलाद्भिन्नस्थाने कुत्राऽपि ममाऽभिलाषो नास्ति, किमुत युवान्तर इत्याशयः। श्लेषालङ्कारोऽत्र, उपजातिवृत्तञ्च।

समासः—एकं च तत् लुब्धम्, तस्मिन् एकलुब्धं, तस्मिन् तदेकलुब्धे। अविद्यमान अर्घः यस्य, तत् अनर्घम्। त्रयाणां लोकानां समाहारः त्रिलोकी, त्रिलोक्याः सारः त्रिलोकीसारः। पद्मम् इव मुखं यस्य सः पद्ममुखः। अथवा पद्मः (निधिः) मुखम् (आदिः) यस्य सः पद्ममुखः।

(२०५) अलं विलम्ब्य त्वरितुं हि वेला, कार्ये किल स्थैर्यसहे विचारः।
गुरूपदेशं प्रतिभेव तीक्ष्णा प्रतीक्षते जातु न कालमर्तिः॥
३।९१॥

प्रसङ्गः—नलं प्रति बद्धानुरागा भैमी नैषधसमागमरूपात्मकं स्वाभीष्टं संसाधनाय त्वराकरणाय हंसं प्रति सम्प्रेरयत्यत्र।

अन्वयः—(हे हंस!) विलम्ब्य अलं, हि त्वरितुं वेला। स्थैर्यसहे कार्ये

विचारः किल । हि तीक्ष्णा प्रतिभा गुरूपदेशम् इव अर्तिः जातु कालं न प्रतीक्षते ।

व्याख्या—( हे हंस ! ) विलम्ब्य=विलम्बं विधाय, अलं=पर्याप्तं, न विलम्बो विधातव्य इत्याशयः । हि=यस्माद्धेतोः, त्वरितुं=त्वरां विधातुं, बेला=समयः, स्थैर्यसहे=विलम्बसहे, कार्ये=कर्मणि, विचारः=विमर्शः, किल=निश्चयेन । हि=यस्माद्धेतोः, तीक्ष्णा=तीव्रा, प्रतिभा=प्रज्ञा, गुरूप देशम्=आचार्योपदेशम्, इव=यथा, अर्तिः=पीडा, जातु=कदाचित्, कालं=समयं, न प्रतीक्षते=प्रतिक्षां न विदधाति, पीडा कालक्षेपं न सहत इत्याशयः । अस्मिन् श्लोके उपमा अर्थान्तरन्यासालङ्कारयोः संसृष्टिः । उपजातिवृत्तञ्च ।

समासः—स्थैर्यं सहत इति स्थैर्यसहं, तस्मिन् स्थैर्यसहे । गुरोरुपदेशः, तम् गुरूपदेशम् ।

(२०६) विज्ञापनीया न गिरो मदर्थाः क्रुधा कदुष्णे हृदि नैषधस्य ।
पित्तेन दूने रसने सिताऽपि तिक्तायते हंसकुलावतंस ॥
३।९४॥

प्रसङ्गः—नलं प्रति बद्धानुरागा भैमी नैषधमुपेत्य तत्र किं करणीयमित्यस्य सविशेषमुपदेशं ददाति हंसं प्रत्यत्र ।

अन्वयः—हे हंसकुलाऽवतंस ! नैषधस्य हृदि क्रुधा कदुष्णे ( सति ) मदर्था गिरो न विज्ञापनीयाः । पित्तेन दूने रसने सिता अपि तिक्तायते ।

व्याख्या—हे हंसकुलाऽवतंस !=भो मरालवंशविभूषण ! नैषधस्य=नलस्य, हृदि=चित्ते, क्रुधा=कोपेन, कदुष्णे=ईषत्तप्ते सति, मदर्थाः=मन्निमित्ताः, गिरः=वाचः, न विज्ञापनीयाः=न वेदनीयाः, ( यतो हि ) पित्तेन=पित्तदोषेण, रसने=रसनेन्द्रिये, दूने=सन्तप्ते सति, सिता अपि=शर्करा अपि, तिक्तायते=तिक्ता भवति । दृष्टान्तालङ्कारोऽत्र, उपजातिवृत्तञ्च ।

समासः—हंसानां कुलं, तस्य अवतंसः, तत्सम्बुद्धौ हे हंसाकुलाऽवतंस ! ईषत् उष्णं, तस्मिन् कदुष्णे । मह्यम् इमाः मदर्थाः ।

(२०७) तुल्याऽऽवयोर्मूर्तिरभून्मदीया दग्धा परं साऽस्य न ताप्यतेऽपि ।
इत्यभ्यसूयन्निव देहतापं तस्याऽतनुस्त्वद्विरहाद्विधत्ते ॥
३।१०२॥

प्रसङ्गः—भैम्याः नलविषयकमनुरागं विज्ञाय स्वयुक्त्या साम्प्रतमत्र

राजहंसः नरपतेः नलस्य भैमीविरहजनितामवस्थां दमयन्तीं प्रति चारुतया वर्णयति ।

अन्वयः—आवयोः मूर्तिः तुल्या अभूत्, परं मदीया दग्धाः, अस्य सा न ताप्यतेऽपि इति असूयन् इव अतनुः त्वद्विरहात् तस्य देहतापं विधत्ते ।

व्याख्या—( हे राजकुमारि ! ) आवयोः=नलस्य मम च, मूर्तिः=तनुः, तुल्या=समानरूपा, अभूत्=बभूव, परं=किन्तु, मदीया=मामकीना तनुः, दग्धा=भस्मीकृता, शङ्करतृतीयलोचनेनेति शेषः, अस्य=नलस्य, सा=तनुः, न ताप्यतेऽपि=तापम् अपि न लभते, दाहस्य तु का कथेति शेषः, इति=अस्माद्धेतोः, असूयन्=ईर्ष्यन्, इव=यथा, अतनुः=अनङ्गः, त्वद्विरहात्=भवत्या वियोगात्, तस्य=नलस्य, देहतापं=तनुसन्तापं, विधत्ते=विदधाति । उत्प्रेक्षालङ्कारोऽत्र, उपजातिवृत्तञ्च ।

समासः—अहं च नलश्च आवां, तयोः आवयोः । तुलया संमिता तुल्या । अविद्यमाना तनुः यस्य स अतनुः । तव विरहः, तस्माद् त्वद्विरहात् । देहस्य तापः, तं देहतापम् ।

(२०८) त्वत्प्रापकात् त्रस्यति नैनसोऽपि
त्वय्येव दास्येऽपि न लज्जते यत् ।
स्मरेण बाणैरतितक्ष्य तीक्ष्णै-
र्लूनः स्वभावोऽपि कियान् किमस्य ? ॥३।११०॥

प्रसङ्गः—भैमीविरहहेतुना नरपतेः नलस्य लज्जात्यागं राजहंसोऽत्र भैमीं प्रति चारुतया समुपवर्णयति ।

अन्वयः—( हे भैमि ! ) स्मरेण तीक्ष्णैः बाणैः अतितक्ष्य अस्य स्वभावोऽपि कियान् अपि लूनः किम् ? यत् त्वत्प्रापकात् एनसः अपि न त्रस्यति, त्वयि दास्ये अपि न लज्जते एव ।

व्याख्या—( हे भैमि ! ) स्मरेण=मन्मथेन, तीक्ष्णैः=निशितैः, बाणैः=शरैः, अतितक्ष्य=अतिमात्रं तनूकृत्य, देहमिति शेषः, अस्य=नलस्य, स्वभावोऽपि=पापभीरुत्वादिरूपा प्रकृतिरपि, कियान् अपि=अल्पः अपि, लूनः किम्=छिन्नः किम् ? यत्=यस्माद्धेतोः, त्वत्प्रापकात्=त्वत्प्राप्तिसाधनात्, एनसः अपि=पापादपि, न त्रस्यति=न बिभेति, एवं च, त्वयि=भवत्यां, दास्ये अपि=दास्यकर्मणि अपि, न लज्जते एव=न त्रपते एव, स नल इति शेषः । उपजातिवृत्तमत्र ।

समासः—तव प्रापकं, तस्मात् त्वत्प्रापकात् ।

(२०९) बिभेति रुष्टाऽसि किलेत्यकस्मात्स त्वां किलोपेत्य हसत्यकाण्डे ।
यान्तीमिव त्वामनुयात्यहेतोरुक्तस्त्वयेव प्रतिवक्ति मोघम् ॥ ३।११२॥

प्रसङ्गः—दमयन्तीविरहात् नरपतेः नलस्योन्मादावस्थां भैमीं प्रति वर्णयति राजहंसोऽत्र ।

अन्वयः—स अकस्मात् रुष्टा असि इति बिभेति, अकाण्डे उपेत्य किल हसति अहेतोः यान्तीम् इव त्वाम् अनुयाति, त्वया उक्त इव मोघं प्रतिवक्ति ।

व्याख्या—स=नलः, अकस्मात्=अकाण्डे, रुष्टा=क्रुद्धा, असि=वर्तसे, इति=एवं सम्भाव्य, बिभेति=त्रस्यति, अकाण्डे=अनवसरे, उपेत्य=प्राप्य, किल=इव, त्वामिति शेषः, हसति=हास्यं विदधाति, अहेतोः=अनिमित्तात्, यान्तीम्=गच्छन्तीम्, इव=यथा, त्वां=भवतीं दमयन्तीं, अनुयाति=अनुसरति, त्वया=भवत्या, उक्त इव=सम्भाषित इव, मोघं=निष्फलं, प्रतिवक्ति=प्रत्युत्तरयति । अयं सर्वोऽप्युन्मादाऽनुभावः । उपजातिवृत्तमत्र ।

समासः—न काण्डः, तस्मिन् अकाण्डे । न हेतुः, तस्मात् अहेतोः ।

(२१०) भवद्वियोगाद् भिदुरार्तिधारायमस्वसुर्मज्जति निःशरण्यः ।
मूर्च्छामयद्वीपमहाऽऽन्ध्यपङ्के हा ! हा ! महीभृद्भटकुञ्जरोऽयम् ॥ ३।११३॥

प्रसङ्गः—भैमी विरहात् नरपतेः नलस्य मूर्च्छाऽवस्थां दमयन्तीं प्रति वर्णयति राजहंसोऽत्र ।

अन्वयः—( हे भैमि ! ) भवद्वियोगात् भिदुरार्तिधारायमस्वसुः मूर्च्छामयद्वीपमहाऽऽन्ध्यपङ्के अयं महीभृद्भटकुञ्जरः निःशरण्यः ( सन् ) मज्जति । हा ! हा ! ।

व्याख्या—( हे भैमि ! ) भवद्वियोगात्=त्वद्विरहाद्धेतोः, भिदुराऽऽर्तिधारायमस्वसुः=अविच्छिन्नदुःखपरम्परायमुनायाः, मूर्च्छामयद्वीपमहाऽऽन्ध्यपङ्के=मूर्च्छारूपसलिलमध्यस्थानमहामोहकर्दमे, अयम्=एषः, महीभृद्भटकुञ्जरः=राजवीरकरी, निःशरण्यः=निरवलम्बः ( सन् ) मज्जति=ब्रुडति, हा हा इति खेदातिशयः । रूपकालङ्कारोऽत्र, उपजातिवृत्तञ्च ।

समासः—भवत्या वियोगः, तस्मात् भवद्वियोगात् । आर्तेर्धारा, भिदुरा चाऽसौ आर्तिधारा, यमस्य स्वसा, भिदुराऽऽर्तिधारा एव यमस्वसा, तस्याः भिदु-

राऽऽर्तिधारायमस्वसुः । मूर्च्छा एव मूर्च्छामयम्, मूर्च्छामयं च तद् द्वीपम् अन्धस्य भावः आन्ध्यम्, महच्च तत् आन्ध्यम्, मूर्च्छामयद्वीपे महाऽऽन्ध्यं, तदेव पङ्कं, तस्मिन् मूर्च्छामयद्वीपमहाऽऽन्ध्यपङ्के । महीं बिभर्तीति महीभृत्, स चाऽसौ भटः, स एव कुञ्जरः, महीभृद्भटकुञ्जरः । निर्गतः शरण्यो यस्मात् सः निःशरण्यः ।

(२११) धन्याऽसि वैदर्भि ! गुणैरुदारैर्यया समाकृष्यत नैषधोऽपि ।
इतः स्तुतिः का खलु चन्द्रिकाया यदब्धिमप्युत्तरलीकरोति ॥
३।११५॥

**प्रसङ्गः**—नलं प्रति बद्धानुरागायाः दमयन्त्याः प्रशंसां विदधाति राजहंसोऽत्र ।

**अन्वयः**—हे वैदर्भि ! धन्या असि, यया उदारैः गुणैः नैषधोऽपि समाकृष्यत । चन्द्रिकायाः यत् अब्धिम् अपि उत्तरलीकरोति, इतः का स्तुतिः खलु ।

**व्याख्या**—हे वैदर्भि !=हे भैमि ! हे वैदर्भिरीते ! इत्यपि व्यज्यते । धन्या=पुण्यवती, असि=विद्यसे, यया=त्वया, उदारैः=उत्कृष्टैः, गुणैः= लावण्यविनयादिभिः, अन्यत्र श्लेषप्रसादादिभिः, गुणैः, नैषधोऽपि=नलोऽपि, तादृशो धीरोऽपि, समाकृष्यत=सम्यक् आकृष्टः, साधु वशीकृत इत्याशयः । चन्द्रिकायाः=कौमुद्याः, यत्=यस्माद्धेतोः, अब्धिम् अपि=सागरम् अपि, गभीरमपीत्याशयः, उत्तरलीकरोति=क्षोभयति, इतः=अस्मात्, का स्तुतिः खलु=का वर्णना खलु, न काऽपीत्याशयः । प्रतिवस्तूपमालङ्कारोऽत्र 'प्रतिवस्तूपमा साम्याद् वाक्ययोर्गम्यसाम्ययोः । एकोऽपि धर्मः सामान्यो यत्र निर्दिश्यते पृथक् ॥ इति लक्षणात् । उपजातिवृत्तञ्च ।

(२१२) नलेन भायाः शशिना निशेव, त्वया स भायान्निशया शशीव ।
पुनः पुनस्तद्युगयुग विधाता स्वभ्यासमास्ते नु युवां युयुक्षुः ॥
३।११७॥

**प्रसङ्गः**—'नरपतिना नलेन साकं तव समागमो भवतु' इति निगदन् राजहंसोऽत्र भैमीमाशीर्वचसा संयुनक्ति ।

**अन्वयः**—शशिना निशा इव (त्वम्) नलेन भायाः, सः (अपि) निशया शशी इव त्वया भायात्, पुनः पुनः तद्युगयुक् विधाता युवां युयुक्षुः स्वभ्यासम् आस्ते नु ।

**व्याख्या**—शशिना=इन्दुना, निशा=रजनी, इव=यथा (त्वं=भवती) नलेन=एतन्नामकेन भूपतिना, भायाः=शोभस्व । सः=नलोऽपि, निशया=

रजन्या, शशी=सुधांऽशुः, इव=यथा, त्वया=भवत्या, भायात्=शोभताम्, पुनः पुनः=बारं बारं, तद्युगयुक्=रजनीन्दुयुगलयोजकः, विधाता=प्रजापतिः, युवां=त्वां नलञ्च, युयुक्षुः=योजनेच्छुः, सन् स्वभ्यासं=निरन्तराऽभ्यासे, आस्ते नु=तिष्ठति किम्? उपमा-उत्प्रेक्षालङ्कारयोः सङ्करोऽत्र, उपजातिवृत्तञ्च।

समासः—तयोर्युगं, तद् युनक्तीति तद्युगयुक्। योक्तुमिच्छुः युयुक्षुः। अभ्यासस्य समृद्धौ स्वभ्यासम्।

---

## चतुर्थः सर्गः

(२१३) अथ नलस्य गुणं गुणमात्मभूः सुरभि तस्य यशःकुसुमं धनुः।
श्रुतिपथोपगतं सुमनस्तया तमिषमाशु विधाय जिगाय ताम्॥
४।१॥

प्रसङ्गः—नरपतिना नलेन साकं भैमीपरिणयप्रस्तावं समुपस्थाप्य भूपतेः नलस्य नानावाचोयुक्त्या प्रशंसा विधाय भैम्याः सन्देशमादाय नलं प्रति गते हंसे राज्ञः स्वयंवरार्थमुपोद्घातत्वेन नैषधं प्रतिबद्धानुरागायाः भैम्याः मदनाऽवस्थां समुपवर्णयति महाकविरत्र।

अन्वयः—अथ आत्मभूः नलस्य गुणं गुणं, सुरभि तस्य यशःकुसुमं धनुः, सुमनस्तया श्रुतिपथोपगतं तम् इषुं विधाय ताम् आशु जिगाय।

व्याख्या—अथ=दमयन्त्याः नलसन्देशश्रवणाऽनन्तरम्, आत्मभूः=मनसिजः, नलस्य=नैषधस्य, गुणं=शौर्यसौन्दर्यादिकं धर्मं, गुणं=मौर्वीं, (विधाय =कृत्वा) सुरभि=सुगन्धि मनोहरं च, तस्य=नैषधस्य, यशःकुसुमं=कीर्तिप्रसूनं, धनुः=कार्मुकं, विधाय। सुमनस्तया=सुमनस्कत्वेन, पुष्पत्वेन च, श्रुतिपथोपगतं=मुहुर्मुहुः दमयन्त्या श्रुतम्, कर्णपर्यन्तमाकृष्टं च, तं=नलम् एव, इषुं=शरं, विधाय=कृत्वा, तां=दमयन्तीं, आशु=क्षिप्रम्, जिगाय= जितवान्, भैमीं नलैकासक्तचित्तां चकारेत्याशयः। अस्मिन् श्लोके रूपकालङ्कारः। द्रुतविलम्बितं वृत्तम् 'द्रुतविलम्बितमाह नभौ भरौ' इति लक्षणात्।

समासः—यश एव कुसुमं, तत् यशःकुसुमम्, शोभनं मनो यस्य स सुमनः, सुमनसो भावः सुमनस्ता, तया सुमनस्तया। पक्षान्तरे—सुमनसो भावः, तया सुमनस्तया। श्रुत्योः पन्थाः श्रुतिपथः, श्रुतिपथम् उपगतः, तम् श्रुतिपथोपगतम्।

(२१४) यदतनुज्वरभाक् तनुते स्म सा प्रियकथासरसीरसमज्जनम् ।
सपदि तस्य चिराऽन्तरतापिनी परिणतिर्विषमा समपद्यत ॥ ४१२॥

प्रसङ्गः—द्रष्टव्यम्, श्लो० २१३ ।

अन्वयः—सा अतनुज्वरभाक् ( सती ) यत् प्रियकथासरसीरसमज्जनं तनुते स्म । ( तदा ) तस्य चिराऽन्तरतापिनी विषमा परिणतिः समपद्यत ।

व्याख्या—सा=भैमी, अतनुज्वरभाक्=कामज्वरसंयुक्ता, समधिकज्वरान्विता च ( सती ) यत्, प्रियकथासरसीरसमज्जनं=नलकथाकासारोदकस्नानं, तनुते स्म=चकार । ( तदा ) तस्य=मज्जनस्य, सपदि=तत्कालं, चिराऽन्तरतापिनी=चिरकालाऽभ्यन्तरतापकारिणी, विषमा=उद्दीपनस्वरूपा, परिणतिः =परिपाकः, समपद्यत=सञ्जाता । विषमालङ्कारोऽत्र, 'गुणौ क्रिये वा यत्स्यातां विरुद्धे हेतुकार्ययोः । यदारब्धस्य वैफल्यमनर्थस्य च सम्भवः ॥ विरूपयोः संघटना या च तद्विषमं मतम् ।' इति लक्षणात् । द्रुतविलम्बितवृत्तञ्च ।

समासः—अविद्यमाना तनुः ( शरीरम् ) यस्य सः अतनुः, अतनोः ज्वरः, तम् भजतीति अतनुज्वरभाक् । पक्षान्तरे—न तनुः अतनुः, अतनुश्चासौ ज्वरः, तं भजतीति अतनुज्वरभाक् । प्रियस्य कथा, सा एव सरसी, तस्य रसः, तस्यां मज्जनं, तत् प्रियकथासरसीरसमज्जनम् । अन्तरं तापयतीति अन्तरतापिनी, चिरम् अन्तरतापिनी चिराऽन्तरतापिनी ।

(२१५) ध्रुवमधीतवतीयमधीरतां दयितदूतपतद्गतिवेगतः ।
स्थितिविरोधकरीं द्व्यणुकोदरी, तदुदितः स हि यो यदनन्तरः ॥ ४१३॥

प्रसङ्गः—द्रष्टव्यम्, श्लो० २१३ ।

अन्वयः—द्व्यणुकोदरी इयं स्थितिविरोधकरीम् अधीरतां दयितदूतपतद्गतिवेगतः अधीतवती, हि यो यदनन्तरः स तदुदितः ध्रुवम् ।

व्याख्या—द्व्यणुकोदरी=अतिकृशोदरी, इयं=भैमी, स्थितिविरोधकरीं=स्त्रीमर्यादाविरोधहेतुम्, अवस्थानविरोधकारणं च, अधीरताम्=चपलताम्, एकस्थानाऽनवस्थानं च, दयितदूतपतद्गतिवेगतः=प्रियदूतविहगगमनवेगात्, अधीतवती=गृहीतवती, हि=यतः, यः=जनः, यदनन्तरः=यत्सन्निहितः,

सः=जनः, तदुदितः=तदुत्पन्नः, ध्रुवं=किमु। अस्मिन् श्लोके उत्प्रेक्षा-अर्थान्तरन्यासालङ्कारयोरङ्गाङ्गिभावसत्वात् सङ्करः। द्रुतविलम्बितं वृत्तम्।

समासः—द्व्यणुकम् इव उदरं यस्याः सा द्व्यणुकोदरी। स्थितेर्विरोधः, स्थितिविरोधं करोतीति तद्धेतुः, ताम् स्थितिविरोधकरीं। न धीरा अधीरा, तस्याः भावः तत्ता, ताम् अधीरताम्। दयितस्य दूतः, स चाऽसौ पतत्, दयितदूतपततः गतिः, तस्याः वेगः, तस्मात् दयितदूतपतद्गतिवेगतः। यस्य अनन्तरः यदनन्तरः। तस्मात् उदितः तदुदितः।

(२१६) निविशते यदि शूकशिखा पदे
सृजति सा कियतीमिव न व्यथाम्।
मृदुतनोर्वितनोतु कथं न ता-
मवनिभृत्तु निविश्य हृदि स्थितः? ॥४।११॥

प्रसङ्गः—द्रष्टव्यम्, श्लो० २१३।

अन्वयः—शूकशिखा पदे निविशते यदि, सा कियतीम् इव व्यथां न सृजति तु अवनिभृत् हृदि निविश्य स्थितः (सन्) मृदुतनोः तां कथं न वितनोतु।

व्याख्या—शूकशिखा=कण्टकाग्रं, पदे=चरणे, निविशते यदि=प्रविशति चेत्, सा=प्रविष्टा शूकशिखा, कियतीम् इव=किं परिमाणाम् इव, व्यथां=पीडां, न सृजति=नोत्पादयति, महतीं व्यथां सृजतीत्याशयः। तु=किन्तु, अवनिभृत्=नरपतिः नलः, पर्वतश्च, हृदि=हृदये, भैम्या इति शेषः, निविश्य=प्रविश्य, स्थितः=वर्तमानः (सन्), मृदुतनोः=कोमलाङ्ग्या भैम्याः, तां=तथाविधां पीडामिति शेषः, कथं=केन प्रकारेण, न वितनोतु=न सृजतु, वितनोत्वेवेति भावः। कैमुत्यन्यायेनार्थापत्तिरलङ्कारोऽत्र, द्रुतविलम्बितम् वृत्तम्।

समासः—शूकस्य शिखा शूकशिखा। अवनिं बिभर्तीति अवनिभृत्। मृदुः तनुः यस्याः सा, तस्याः मृदुतनोः।

(२१७) स्मरकृतिं हृदयस्य मुहुर्दशां बहु वदन्निव निःश्वसिताऽनिलः।
व्यधित वाससि कम्पमदः श्रिते त्रसतिकः सति नाऽऽश्रयबाधने? ॥४।१६॥

प्रसङ्गः—द्रष्टव्यम्, श्लो० २१३।

अन्वयः—निःश्वसिताऽनलः स्मरकृतिं हृदयस्य दशां बहु वदन् इव अदः श्रिते वाससि कम्पं मुहुः व्यधित? आश्रयबाधने सति को न त्रसति?

व्याख्या—निःश्वसिताऽनलः=निःश्वासपवनः, भैम्या इति शेषः। स्मरकृतिं =कामदेवकर्तृकसृष्टिरूपां, हृदयस्य=हृत्पिण्डस्य, दमयन्त्या इति शेषः, दशां= अवस्थां, बहु=बहुवारं, वदन् इव=एवं कम्पत इति कथयन्निव, अदःश्रिते= हृदयाऽऽश्रिते, वाससि=वसने, कम्पं=चलनं, तत्कारणं त्रासञ्च, मुहुः= अभीक्ष्णं, व्यधित=विहितवान्, आश्रयबाधने सति=आधारबाधायां सत्यां, कः=जनः, न त्रसति=न बिभेति, सर्वोऽपि त्रसत्येवेति भावः। अस्मिन् श्लोकेऽर्थान्तरन्यासालङ्कारः, द्रुतविलम्बितं वृत्तञ्च विद्येते।

समासः—निःश्वसितस्य अनलः, निःश्वसिताऽनलः। स्मरस्य कृतिः, ताम् स्मरकृतिम्। अदः श्रितं, तस्मिन् अदःश्रिते।

(२१८) हृदयदत्तसरोरुहया तया क्व सदृगस्तु वियोगनिमग्नया।
प्रियधनुः परिरभ्य हृदा रतिः किमनुमर्तुमशेत चिताऽर्चिषि॥
४।२१॥

प्रसङ्गः—द्रष्टव्यम्, श्लो० २१३।

अन्वयः—वियोगनिमग्नया हृदयदत्तसरोरुहया तया सदृक् क्व अस्तु? (यद्वा) रतिः हृदा प्रियधनुः परिरभ्य अनुमर्तुं चिताऽर्चिषि अशेत किम्?

व्याख्या—वियोगनिमग्नया=विरहाऽग्निमग्नया, (अतएव) हृदयदत्त-सरोरुहया=वक्षोनिक्षिप्तपद्मया, तया=भैम्या, सदृक्=सदृशी स्त्री, क्व=कुत्र, अस्तु=भवतु, न क्वापीत्याशयः। (यद्वा) रतिः=कामदयिता, हृदा=वक्षसा, प्रियधनुः=दयितपुष्पं, कमलमित्याशयः, परिरभ्य=आलिङ्ग्य, अनुमर्तुं= अनुमरणं कर्तुं, चिताऽर्चिषि=चिताऽनले, अशेत किम्=शयिता किम्? मृतं पतिमनुगन्तुं चिताऽग्नौ शयाना साक्षाद्रतिरेवेयमित्युत्प्रेक्षालङ्कारोऽत्र। द्रुत-विलम्बितं वृत्तम्।

समासः—वियोगे निमग्ना, तया वियोगनिमग्नया। हृदये दत्तं, हृदयदत्तं सरोरुहं यया सा, तया हृदयदत्तसरोरुहया। समाना दृश्यत इति सदृक्। प्रियस्य धनुः, तत् प्रियधनुः। चितायाः अर्चिः, तस्मिन् चिताऽर्चिषी।

(२१९) त्वदितरो न हृदाऽपि मया धृतः पतिरितीव नलं हृदयेशयम्।
स्मरहविर्भुजि बोधयति स्म सा विरहपाण्डुतया निजशुद्धताम्॥
४।३१॥

प्रसङ्गः—द्रष्टव्यम्, श्लो० २१३।

अन्वयः—सा हृदयेशयं नलं 'त्वदितरः पतिः मया हृदा अपि न धृतः' इति इव निजशुद्धतां विरहपाण्डुतया स्मरहविर्भुजि बोधयति स्म ।

व्याख्या—सा=भैमी, हृदयेशयं=चित्तस्थितं, नलं=नैषधं, त्वदितरः=भवद्भिन्नः, पतिः=स्वामी, मया=दमयन्त्या, हृदा अपि=चित्तेनापि, न धृतः=न विचारितः । इति=इत्थं, इव=यथा, निजशुद्धतां=स्वनिर्दोषतां, पाण्डुत्वञ्च, विरहपाण्डुतया=वियोगपाण्डुरत्वव्याजेन, स्मरहविर्भुजि=कामाऽग्नौ, बोधयति स्म=बोधितवती । मदनाऽनलनिमग्ना दमयन्ती वह्निदिव्येन सीता राममिव नलं निजशुद्धिं बोधयामासेवेत्याशयः । अस्मिन् श्लोके रूपकोत्प्रेक्षयोः संसृष्टिः । द्रुतविलम्बितं वृत्तम् ।

समासः—हृदये शेते इति हृदयेशयः, तम् हृदयेशयम् । त्वत् इतरः त्वदितरः । शुद्धस्य भावः, निजस्य शुद्धता, ताम् निजशुद्धताम् । पाण्डोर्भावः, विरहेण पाण्डुता, तया विरहपाण्डुतया । स्मर एव हविर्भुक्, तस्मिन् स्मरहविर्भुजि ।

( २२० ) न्यधित तद्धृति शल्यमिव द्वयं
विरहितां च तथाऽपि च जीवितम् ।
किमथ तत्र निहत्य निखातवान्
रतिपतिः स्तनबिल्वयुगेन तत् ।।४।४१।।

प्रसङ्गः—द्रष्टव्यम्, श्लो० २१३ ।

अन्वयः—रतिपतिः तद्धृदि विरहितां तथा अपि जीवितं च (इति) द्वयं शल्यम् इव न्यधित, अथ तत् स्तनबिल्वयुगेन तत्र निहत्य निखातवान् किम् ?

व्याख्या—रतिपतिः=मनसिजः, तद्धृदि=भैमीहृदये, विरहितां=वियोगितां, तथाऽपि=विरहितायां सत्याम् अपि, जीवितं च=जीवनं च (इति) द्वयं=द्वितयं, शल्यं=शङ्कुं, इव=यथा, न्यधित=निखातवान् । अथ=निखननाऽनन्तरं, तत्=शल्यद्वयं, स्तनबिल्वयुगेन=कुचश्रीफलयुग्मेन, तत्र=भैमीहृदये, निहत्य=आहत्य, निखातवान् किम् ?=न्यधित किमु ? यथा लोके निखातं शङ्कुं दार्ढ्याय पाषाणेन घ्नन्ति तद्वदित्याशयः । रूपकोत्प्रेक्षालङ्कारयोः संसृष्टिरत्र । द्रुतविलम्बितं वृत्तम् ।

समासः—रतेः पतिः रतिपतिः । तस्या हृत्, तस्मिन् तद्धृदि । विरहिण्या भावो विरहिता, ताम् विरहिताम् । स्तनौ एव बिल्वे, तयोर्युगं, तेन स्तनबिल्वयुगेन ।

(२२१) जनुरधत्त सती स्मरतापिता हिमवतो न तु तन्महिमादृता ।
ज्वलति फालतले लिखितः सतीविरह एव हरस्य न लोचनम् ॥ ४।४५॥

**प्रसङ्गः**—अश्रुवदना भैमी सखीं प्रति निगदत्यत्र ।

**अन्वयः**—सती स्मरतापिता ( सती ) हिमवतो जनुः अधत्त, तन्महिमाहृता तु न अधत्त, हरस्य फालतले लिखितः सतीविरह एव ज्वलति लोचनं न ( ज्वलति ) ।

**व्याख्या**—सती=दक्षतनया, स्मरतापिता=मन्मथ सन्तापिता, हिमवतः=हिमाचलात्, जनुः=जन्म, अधत्त=धृतवती, तन्महिमादृता=हिमाचलमहत्वेन सञ्जाताऽऽदरा सती तु, न अधत्त=जन्म न गृहीतवती । (एवं च) हरस्य=शङ्करस्य, फालतले=भालतले, लिखितः=विन्यस्तः, सतीविरह एव=दाक्षायणी वियोग एव, ज्वलति=दीप्यते, लोचनं=नयनं, वह्निरूपं तृतीयं नयनमित्याशयः, न=नहि, ( ज्वलति=दीप्यते ) । अपह्नुतिरलङ्कारोऽत्र । द्रुतविलम्बितं वृत्तम् ।

**समासः**—स्मरेण तापिता स्मरतापिता । तस्य महिमा, तस्मिन् आहृता, तन्महिमाहृता । फालस्य तलं, तस्मिन् फालतले । सत्या विरहः, सतीविरहः ।

(२२२) दहनजा न पृथुर्दवथुव्यथा, विरहजैव पृथुर्यदि नेदृशम् ।
दहनमाशु विशन्ति कथं स्त्रियः प्रियमपासुमुपासितुमुद्धुराः ॥ ४।४६॥

**प्रसङ्गः**—अश्रुसम्पूरितवदना भैमी सखीं प्रति निजाशयं निगदत्यत्र ।

**अन्वयः**—दहनजा दवथुव्यथा पृथुः न, ( किन्तु ) विरहजा एव पृथुः । ईदृशं न यदि, स्त्रियः अपासुं प्रियम् उपासितुम् उद्धुराः ( सत्यः ) कथम् आशु दहनं विशन्ति ?

**व्याख्या**—दहनजा=वह्निदाहजन्या, दवथुव्यथा=तापदुःखं, पृथुः=अधिका, न=नहि, ( किन्तु ) विरहजा एव=वियोगोद्भूता एव, पृथुः=अधिका । ईदृशं न यदि=इत्थं न चेत्, स्त्रियः=नार्यः, अपासुं=पञ्चत्वमुपगतं, प्रियं=स्वामिनम्, उपासितुं=सेवितुं, उद्धुराः=निष्प्रतिबन्धाः सत्यः, कथं=किमर्थम्, आशु=क्षिप्रम्, दहनम्=अनलम्, विशन्ति=प्रविशन्ति । अर्थान्तरन्यासालङ्कारोऽत्र, द्रुतविलम्बितं वृत्तम् ।

**समासः**—दहनाज्जाता दहनजां। दवथोर्व्यथा दवथुव्यथा। विरहाज्जाता विरहजा। अपगता असवो यस्य सः; तम् अपासुम्। उद्गता धूः यासां ता उद्धुराः।

(२२३) सकलया कलया किल दंष्ट्रया समवधाय यमाय विनिर्मितः।
विरहिणीगणचर्वणसाधनं विधुरतो द्विजराज इति श्रुतः॥ ४।७२॥

**प्रसङ्गः**—द्रष्टव्यम्, श्लो० २२२।

**अन्वयः**—विधुः सकलया कलया (एव) दंष्ट्रया यमाय समवधाय विरहिणीगणचर्वणसाधनं विनिर्मितः किल। अतः 'द्विजराज' इति श्रुतः।

**व्याख्या**—विधुः=हिमांशुः, सकलया=समस्तया, कलया=अंशेन (एव) दंष्ट्रया=दशनविशेषेण, यमाय=अन्तकार्थम्, समवधाय=सम्यक् अवधानं विधाय, विरहिणीगणचर्वणसाधनं=वियोगिनीव्रातभक्षणकारणं, विनिर्मितः=रचितः, ब्रह्मणा इति शेषः, किल=खलु। अतः=अस्माद्धेतोः, दंष्ट्राविशेषवत्वादित्याशयः, द्विजराजः=द्विजराजसंज्ञकः, इति=इत्थं, श्रुतः=आकर्णितः। चन्द्रः ब्राह्मणराजत्वान्न, दंष्ट्राविशेषवत्वात् 'द्विजराज' इति संज्ञामधिगतवानित्याशयः।

**समासः**—विरहिणीनां गणः, तस्य चर्वणं, तस्य साधनं, विरहिणीगणचर्वणसाधनम्। द्विजानां राजा-द्विजराजः।

(२२४) विरहिणो विमुखस्य विधूदये शमनदिक्पवनः स न दक्षिणः।
सुमनसो नमयन्नटनौ धनुस्तव तु बाहुरसौ यदि दक्षिणः॥ ४।९६॥

**प्रसङ्गः**—अश्रुसम्पूरितलोचना भैमी स्वसखीं प्रति मनसिजमुद्दिश्य निजाक्रोशमभिव्यनक्ति।

**अन्वयः**—(हे शूर!) तव असौ बाहुः विधूदये सुमनसः धनुः अटनौ नमयन् दक्षिणः स्यात् यदि (तदा) विमुखस्य विरहिणः सः शमनदिक्पवनः दक्षिणः न।

**व्याख्या**—(हे शूर!) तव=भवतः, असौ=अयं, बाहुः=भुजः, विधूदये=चन्द्रोदये, सहायलाभे सतीति शेषः, सुमनसः=पुष्पम् एव, धनुः=चापम्, अटनौ=कोटौ, नमयन्=नम्रीकुर्वन्, दक्षिणः=कुशलः, विरहिजनप्रहार इति शेषः, स्यात् यदि=भवेच्चेत्, (तदा) विमुखस्य=पराङ्मुखस्य, चन्द्रोदया-

द्विह्वलमुखस्येति भावः, विरहिणः=वियोगिजनस्य, स=प्रथितः, दक्षिणत्वेनेति शेषः, शमनदिक्पवनः=यमदिशामारुतः, दक्षिणो न=दाक्षिण्यवान्, सव्येतरश्च न, किन्तु सोऽपि त्वत्सहकारित्वान्निर्दयं प्रहर्ता एवेत्याशयः। शमनदिक्पवनोऽपि न दक्षिण इति स्फुरणाद्विरोधाभासालङ्कारोऽत्र। द्रुतविलम्बितं वृत्तम्।

**समासः**—विधोः उदयः, तस्मिन् विधूदये। विरुद्धं मुखं यस्य सः, तस्य विमुखस्य। शमनस्य (यमस्य) दिक् (अवाची) तस्याः पवनः, शमनदिक्पवनः।

(२२५) "अमृतदीधितिरेष विदर्भजे !
भजसि तापममुष्य किमंशुभिः ?"
"यदि भवन्ति मृताः सखि ! चन्द्रिकाः
शशभृतः क्व तदा परितप्यते ?" ॥४।१०४॥

**प्रसङ्गः**—अश्रुसम्पूरितनयनायाः भैम्याः आलिभिः साकमुत्तर-प्रत्युत्तरं समुपवर्णयति महाकविरत्र।

**अन्वयः**—"हे विदर्भजे ! एष अमृतदीधितिः, अमुष्य अंशुभिः किं तापं भजसि ?" "हे सखि ! शशभृतः चन्द्रिकाः मृता भवन्ति यदि, तदा क्व परितप्यते ?"।

**व्याख्या**—हे विदर्भजे !=हे भैमि !, एषः=पुरोवर्ती, अमृतदीधितिः=सुधांऽशुः, चन्द्र इत्याशयः, न तीक्ष्णदीधितिः सूर्य इति निगूढोऽभिप्रायः। अमुष्य=चन्द्रस्य, अंशुभिः=मयूखैः, किं=किमर्थं, तापं=सन्तापं, भजसि=अनुभवसि। दमयन्ती—हे सखि !=हे वयस्ये ! शशभृतः=सुधांऽशोः, चन्द्रिकाः=ज्योत्स्नाः, मृताः=नष्टाः, भवन्ति यदि=सन्ति चेत्, कृष्णपक्षवदिति शेषः, तदा=तर्हि, क्व=कुत्र, परितप्यते=सन्तप्यते ? न क्वापि परितप्यत इत्याशयः। श्लेषवक्रोक्तिरलङ्कारोऽत्र, 'अन्यस्याऽन्यार्थकं वाक्यमन्यथा योजयेद्यदि। अन्यः श्लेषेण काक्वा वा सा वक्रोक्तिस्ततो द्विधा'॥ इति लक्षणात्। द्रुतविलम्बितं वृत्तम्।

**समासः**—विदर्भाज्जाता, तत्सम्बुद्धौ विदर्भजे ! अमृतं दीधितिः अस्य सः अमृतदीधितिः। शशं बिभर्तीति शशभृत्, तस्य शशभृतः।

(२२६) उपचचार चिरं मृदुशीतलैर्जलजजालमृणालजलाऽऽदिभिः।
प्रियसखीनिवहः स तथा क्रमादियमवाप यथा लघु चेतनाम्॥
४।११२॥

प्रसङ्गः—कामज्वराऽऽधिक्यात् मूर्च्छामधिगते दमयन्त्याः सखीजनेन विहितमुपचारं समुपवर्णयति महाकविरत्र।

अन्वयः—स प्रियसखीनिवहः मृदुशीतलैः जलजजालमृणालजलाऽऽदिभिः क्रमात् चिरं तथा उपचचार, यथा इयं लघु चेतनाम् अवाप।

व्याख्या—स=पूर्वनिगदितः, प्रियसखीनिवहः=अभीष्टवयस्याव्रातः, मृदुशीतलैः=कोमलशीतैः, जलजजालमृणालजलाऽऽदिभिः=कमलसमूहबिस-सलिलादिभिः, आदिशब्दात्तालवृन्तादिसाधनविशेषैश्च, क्रमात्=परिपाट्या, चिरं=बहुकालं यावत्, तथा=तेन प्रकारेण, उपचचार=उपचरितवान्, यथा=येन प्रकारेण, इयं=एषा भैमी, लघु=क्षिप्रं, चेतनां=संज्ञाम्, अवाप=अधिगतवती। द्रुतविलम्बितं वृत्तम्।

समासः—प्रियाश्च ताः सख्यः, तासां निवहः, प्रियसखीनिवहः। मृदूनि च तानि शीतलानि, तैः मृदुशीतलैः। जलजानां जालानि, जलजजालानि मृणालानि जलानि च, तानि आदयो येषां, तैः जलजजालमृणालजलादिभिः।

( २२७ ) द्रुतविगमितविप्रयोगचिह्नामपि
तनयां नृपतिः पदप्रणम्राम्।
अकलयदसमाशुगाधिमग्नां
झटिति पराशयवेदिनो हि विज्ञाः॥ ४।११८॥

प्रसङ्गः—विप्रयोगचिह्नापसारणानन्तरमपि नृपतिः भीमः 'दमयन्ती कामसन्तप्ता वर्तते' इति विज्ञातवानित्यस्य वर्णनं विदधाति महाकविरत्र।

अन्वयः—नृपतिः द्रुतविगमितविप्रयोगचिह्नाम् अपि पदप्रणम्रां तनयाम् असमाऽऽशुगाऽऽधिमग्नाम् अकलयत्, हि विज्ञाः झटिति पराशयवेदिनः।

व्याख्या—नृपतिः=नरपतिः भीमः, द्रुतविगमितविप्रयोगचिह्नाम् अपि=द्रागपसारितशिशिरोपचारचिह्नामपि, पदप्रणम्रां=चरणनिपतितां, तनयाम्=आत्मजाम्, असमाऽऽशुगाऽऽधिमग्नाम्=मदनव्यथामग्नाम्, अकलयत्=विज्ञातवान्, हि=यस्माद्धेतोः, विज्ञाः=प्रवीणाः, झटिति=अविलम्बेन, पराशयवेदिनः=अन्याऽभिप्रायज्ञातारः, भवन्तीति शेषः, अर्थान्तरन्यासालङ्कारोऽत्र। पुष्पिताग्रावृत्तम् 'अयुजि नयुगरेफतो यकारो युजि च नजौ जरगाश्च पुष्पिताग्रा' इति लक्षणात्।

समासः—नृणां पतिः नृपतिः। द्रुतं विगमितं, विप्रयोगस्य चिह्नम्, द्रुतविगमितं विप्रयोगचिह्नं यस्याः सा, ताम् द्रुतविगमितविप्रयोगचिह्नाम्। पदयोः

प्रणम्रा, ताम् पदप्रणम्राम् । न समाः, असमा आशुगा यस्य सः, असमाशुगेन आधिः, तस्मिन् मग्ना, ताम् असमाऽऽशुगाऽऽधिमग्नाम् । आशयं विदन्तीति आशयवेदिनः, परेषाम् आशयवेदिनः पराशयवेदिनः ।

---

## पञ्चमः सर्गः

(२२८) गच्छता पथि विनैव विमानं
व्योम तेन मुनिना विजगाहे ।
साधने हि नियमोऽन्यजनानां
योगिनां तु तपसाऽखिलसिद्धिः ॥५।३॥

**प्रसङ्गः**—भैमी सौन्दर्यप्रशंसां स्वर्गलोकं प्रापयितुकामः महर्षिः नारदः विमानं विनैव गगनं लङ्घितवानिति वर्णयन् महाकविरत्र योगिनो नारदस्य तपःसिद्धिप्रकर्षं सन्दर्शयति ।

**अन्वयः**—पथि विमानं विना एव गच्छता तेन मुनिना व्योम विजगाहे, हि साधने नियमः अन्यजनानां योगिनां तु तपसा अखिलसिद्धिः ।

**व्याख्या**—पथि=वर्त्मनि, विमानं विना एव=व्योमयानं विनैव, गच्छता व्रजता, तेन=पूर्वनिगदितेन, मुनिना=महर्षिणा नारदेन, व्योम=गगनं, विजगाहे=प्रविष्टम्, हि=यस्माद्धेतोः, साधने=उपाये, नियमः=अवश्यम्भावः, अन्यजनानां=अपरजनानाम्, कृते विद्यत इति शेषः । योगिनां तु=तपोयोगसमन्वितानां तु, तपसा=तपोधर्मेण, अखिलसिद्धिः=अशेषकार्यसिद्धिः । तस्मान्नारदसदृशानां योगिनां कृते किं विमानेनेत्याशयः । अर्थान्तरन्यासालङ्कारोऽत्र, स्वागता वृत्तम् 'स्वागतेति रनभाद्गुरुयुग्मम्' इति लक्षणात् ।

**समासः**—अन्ये च ते जनाः, तेषाम् अन्यजनानाम् । अखिलानां सिद्धिः अखिलसिद्धिः ।

(२२९) पर्यभूद्दिनमणिर्द्विजराजं यत्करैरहह ! तेन तदा तम् ।
पर्यभूत् खलु करैर्द्विजराजः, कर्म कः स्वकृतमत्र न भुङ्क्ते ॥
५।६॥

**प्रसङ्गः**—'महामुनौ नारदे गगनं सम्प्राप्ते सति तपः प्रभावात् भगवान् भास्करः निजतापं तथा सङ्कोचयत् यथा ब्रह्मणः मानसपुत्रो नारदः क्लेशं नावाप' इति वर्णयन् महाकविः योगिनः सुकृतफलमत्राभिव्यनक्ति ।

अन्वयः—दिनमणिः द्विजराजं करैः यत् पर्यभूत्, तेन तदा तं द्विजराजः करैः पर्यभूत्। अहह! (तथाहि—) अत्र कः स्वकृतं कर्म न भुङ्क्ते?

व्याख्या—दिनमणिः=रविः, द्विजराजं=चन्द्रं, ब्राह्मणोत्तमं च, करैः=अंशुभिः, हस्तैश्च, यत् पर्यभूत्=परिभूतवान्, अहह=अद्भुतम्। तथाहि—अत्र=अस्मिन् लोके, कः=जनः, स्वकृतम्=निजविहितं, न भुङ्क्ते=नानुभवति?। अर्थान्तरन्यासालङ्कारोऽत्र, स्वागता वृत्तम्।

समासः—दिनस्य मणिः दिनमणिः। द्विजानां राजा, तम् द्विजराजम्। स्वेन कृतं, तत् स्वकृतम्।

(२३०) अर्चनाभिरुचितोच्चतराभिश्चारु तं सदकृताऽतिथिमिन्द्रः।
यावदर्हकरणं किल साधोः प्रत्यवायधुतये न गुणाय॥ ५।११॥

प्रसङ्गः—'स्वभवनं सम्प्राप्तस्य योगिप्रवरस्य महर्षेः नारदस्य यथाशक्ति सपर्यां विहितवान् शक्रः' इत्यस्य मनोरमं वर्णनं विदधाति महाकविरत्र।

अन्वयः—इन्द्रः तम् अतिथिम् उचितोच्चतराभिः अर्चनाभिः चारु सदकृत, यावदर्हकरणं साधोः प्रत्यवायधुतये, गुणाय न किल।

व्याख्या—इन्द्रः=पुरन्दरः, तम्=पूर्वोक्तं, अतिथिं=मुनिं नारदं, उचितोच्चतराभिः=विहितप्रचुराभिः, अर्चनाभिः=पूजाभिः, चारु=शोभनं यथा तथा, सदकृत=सत्कृतवान्, यावदर्हकरणं=यावदुक्तमाचरणं, साधोः=शिष्टजनस्य, प्रत्यवायधुतये=अकरणदोषनिवारणाय एव, गुणाय=उत्कर्षाय, न=नहि, किल=खलु। अर्थान्तरन्यासालङ्कारोऽत्र, स्वागता वृत्तञ्च।

समासः—अतिशयेन उच्चा उच्चतराः, उचितात् उच्चतराः, ताभिः उचितोच्चतराभिः। यावान् अर्हो यावदर्हं, यावदर्हस्य करणम् यावदर्हकरणम्। प्रत्यवायस्य धुतिः, तस्मै प्रत्यवायधुतये।

(२३१) मुद्रिताऽन्यजनसङ्कथनः सन्नारदं बलरिपुः समवादीत्।
आकरः स्वपरभूरिकथानां प्रायशो हि सुहृदो सहवासः॥ ५।१२॥

प्रसङ्गः—पुरन्दरोऽन्यजनान् परिहाय महर्षिणा नारदेन साकं संलापं विहितवानित्यस्य चारुतया वर्णनं विदधाति महाकविरत्र।

अन्वयः—बलरिपुः मुद्रितान्यजनसङ्कथनः सन् नारदं समवादीत्, हि प्रायशः सुहृदो सहवासः स्वपरभूरिकथानाम् आकरः।

व्याख्या—बलरिपुः=इन्द्रः, मुद्रिताऽन्यजनसंकथनः ( सन् )=निवारितेतरजनाऽऽलापः ( सन् ), नारदं=देवर्षि, समवादीत्=समवोचत्, हि=यस्माद्धेतोः, प्रायशः=बाहुल्येन, सुहृदोः=मित्रयोः, सहवासः=सङ्गमः, स्वपरभूरिकथानां=आत्मीयाऽन्यबहुसंलापानाम्, आकरः=खनिः। अर्थान्तरन्यासालङ्कारोऽत्र, स्वागता वृत्तम्।

समासः—बलस्य रिपुः बलरिपुः। अन्यश्चासौ जनः, तेन संकथनम्, मुद्रितम् अन्यजनसंकथनं येन सः मुद्रिताऽन्यजनसंकथनः। शोभनं हृदयं ययोस्तौ, तयोः सुहृदोः। भूरयश्च ताः कथाः, स्वे च परे च, स्वपरेषां भूरिकथाः, तासाम् स्वपरभूरिकथानाम्।

(२३२) पार्थिवं हि निजमाजिषु वीरा दूरमूर्ध्वगमनस्य विरोधि।
गौरवाद्वपुरपास्य भजन्ते मत्कृतामतिथिगौरवऋद्धिम् ॥
५।१५॥

प्रसङ्गः—सङ्गरेषु कलेवरं त्यक्ष्यमाणानां शूराणां गौरवं सन्दर्शयन् तेषामभावं प्रतिपादयति पुरन्दरः नारदं प्रति साम्प्रतमत्र।

अन्वयः—वीराः पार्थिवं गौरवात् ऊर्ध्वगमनस्य दूरं विरोधि निजं वपुः आजिषु अपास्य मत्कृताम् अतिथिगौरवऋद्धि भजन्ते हि।

व्याख्या—वीराः=शूराः, पूर्वोक्ता रणपातिन इत्याशयः, पार्थिवं=पृथ्वीविकारम्, अतएव, गौरवात्=गुरुत्वगुणयोगित्वात्, ऊर्ध्वगमनस्य=उत्पतनकर्मणः, पार्थिवत्वात् ऊर्ध्वलोकप्राप्तेश्च, दूरम्=अत्यन्तं, विरोधि=प्रतिबन्धकं, निजं=स्वकीयं, वपुः=देहम्, आजिषु=रणेषु, अपास्य=परित्यज्य, मत्कृताम्=मद्विहिताम्, अतिथिगौरवऋद्धि=आगन्तुकसत्कारसमृद्धि, भजन्ते=लभन्ते, हि=निश्चयेन। तादृशवीराऽप्राप्तौ ममाऽतिथिलाभो न स्यादित्याशयः। स्वागता वृत्तमत्र।

समासः—पृथिव्या विकारः, तत् पार्थिवम्। ऊर्ध्वं च तत् गमनं, तस्य ऊर्ध्वगमनस्य। मया कृता, तां मत्कृताम्। अतिथेः गौरवं, तस्य ऋद्धिः, ताम् अतिथिगौरवऋद्धिम्।

(२३३) एवमुक्तवति देवऋषीन्द्रे द्रागभेदि मघवाननमुद्रा।
उत्तरोत्तरशुभो हि विभूनां कोऽपि मञ्जुलतमः क्रमवादः ॥
५।३७॥

प्रसङ्गः—'स्वर्गे रणमस्ति न वा' इति महर्षिणा नारदेन सम्पृष्टे सति शक्रस्य मौनं भङ्गोभूदित्यस्य मनोरमं वर्णनं विदधाति महाकविरत्र ।

अन्वयः—देवऋषीन्द्रे एवम् उक्तवति मघवाननमुद्रा द्राक् अभेदि, हि विभूनां कोऽपि मञ्जुलतमः क्रमवादः उत्तरोत्तरशुभः ।

व्याख्या—देवऋषीन्द्रे=नारदे, एवम्=इत्थम्, उक्तवति=भाषितवति सति, मघवाननमुद्रा=पुरन्दरमुखमौनं, द्राक्=क्षिप्रम्, अभेदि=स्वयमेव भिद्यते स्म, हि=यस्माद्धेतोः, विभूनां=प्रभूणां, कोऽपि=अनिर्वाच्यः, मञ्जुलतमः=अतिहृद्यः, क्रमवादः=प्रश्नोत्तरक्रमोक्तिः, उत्तरोत्तरशुभः=उपर्युपरिसुभगः, भवतीति शेषः । अर्थान्तरन्यासालङ्कारोऽत्र, स्वागता वृत्तम् ।

समासः—देवानाम् ऋषयः, देवऋषीणाम् इन्द्रः, तस्मिन् देवऋषीन्द्रे । मघोन आननं, तस्य मुद्रा, मघवाननमुद्रा । अतिशयेन मञ्जुलः, मञ्जुलतमः ।

(२३४) काऽनुजे मम निजे दनुजाऽरौ जाग्रति स्वशरणे रणचर्चा ।
यद्भुजाङ्कमुपधाय जयाऽङ्कं शर्मणा स्वपिमि वीतविशङ्कः ॥
५।३८॥

प्रसङ्गः—'स्वर्गे रणमस्ति न वा' इत्येवंरूपेण महर्षिणा नारदेन सम्पृष्टः पुरन्दरः स्वकीयमुत्तरमत्र ददाति ।

अन्वयः—( हे देवर्षे ! ) निजे अनुजे दनुजाऽरौ स्वशरणे जाग्रति (सति) मम रणचर्चा का ? जयाऽङ्कं यद्भुजाङ्कम् उपधाय वीतविशङ्कः ( सन् ) शर्मणा स्वपिमि ।

व्याख्या—( हे देवर्षे ! ) निजे=स्वकीये, अनुजे=अवरजे, दनुजारौ=उपेन्द्रे, स्वशरणे=स्वरक्षके, स्वगृहे वा, जाग्रति=जागरूके सति, मम=शक्रस्य, रणचर्चा=युद्धचिन्ता, का=न काऽपीत्याशयः, जयाऽङ्कं=विजयचिह्नं, यद्भुजाङ्कम्=यद्बाहूत्सङ्गम्, उपधाय=उपधानं विधाय, वीतविशङ्कः=निरातङ्कः, ( सन् ) शर्मणा=सुखेन, स्वपिमि=शये । यथा रक्षिजने जाग्रति राजा शय्यागारे सुखेन भुजमुपधाय स्वपिति तद्वदित्याशयः । स्वागता वृत्तमत्र ।

समासः—दनुजानाम् अरिः, तस्मिन् दनुजाऽरौ । स्वस्य शरणं, तस्मिन् जाग्रति । रणस्य चर्चा रणचर्चा । जयः अङ्कः यस्य सः, तम् जयाऽङ्कम् । भुज एव अङ्कः, यस्य भुजाऽङ्कः, तम् यद्भुजाङ्कम् । विविधा चाऽसौ शङ्का, विशेषेण इति वीता, वीता विशङ्का यस्य सः वीतविशङ्कः ।

(२३५) पर्वतेन परिपीय गभीरं नारदीयमुदितं प्रतिनेदे।
स्वस्य कश्चिदपि पर्वतपक्षच्छेदिनि स्वयमदर्शि न पक्षः ॥५।४४॥

प्रसङ्गः—महर्षि पर्वतः नारदेन्द्रसंलापमाकर्ण्य नारदमतं समर्थयन् कश्चित् निजपक्षं न संस्थापितवानित्यस्य वर्णनं चारुतया विदधाति महाकविरत्र।

अन्वयः—पर्वतेन गभीरं नारदीयम् उदितं परिपीय प्रतिनेदे, पर्वतपक्षच्छेदिनि स्वस्य कश्चित् अपि पक्षः स्वयं न अदर्शि।

व्याख्या—पर्वतेन=एतन्नामकेन मुनिना, गिरिणा च, गभीरं=गम्भीरं, नारदीयम्=नारदसम्बन्धि, उदितं=उक्तं, नारदवचनमित्याशयः, परिपीय=पीत्वा, आकर्ण्येति भावः। प्रतिनेदे=प्रतिदध्वने, तदेवानुकृतमित्याशयः, पर्वतपक्षच्छेदिनि=अद्रिपक्षच्छेदके इन्द्रे, स्वस्य=आत्मनः, कश्चित् अपि=कोऽपि, पक्षः=साध्यं, गरुच्च, स्वयं=आत्मना, न अदर्शि=न दर्शितः, पर्वतपक्षच्छेदित्वादिन्द्रस्याऽग्रे पर्वतेन स्वपक्षो न प्रकाशित इति ध्वनिः। स्वागता वृत्तमत्र।

समासः—नारदस्य इदं, तत् नारदीयम्। पर्वतानां पक्षाः, तान् छिनत्तीति तच्छीलः पर्वतपक्षच्छेदी, तस्मिन् पर्वतपक्षच्छेदिनि।

(२३६) अन्वयुर्द्युतिपयःपितृनाथास्तं मुदाऽथ हरितां कमितारः।
वर्त्म कर्षतुपुरःपरमेकस्तद्गताऽनुगतिको न महार्घः॥
५।५५॥

प्रसङ्गः—भैम्याः स्वयम्वरार्थं भूतलं प्रति पुरन्दरस्य प्रस्थानानन्तरं वरुणयमाग्निप्रभृतयो देवा तमनुचक्रुरित्यस्य मनोरमं वर्णनं विदधाति महाकविरत्र।

अन्वयः—अथ हरितां कमितारः द्युतिपयःपितृनाथाः, तं मुदा अन्वयुः, (तथाहि) एकः परं पुरो वर्त्म कर्षतु, तद्गताऽनुगतिको महाऽर्घो न।

व्याख्या—अथ=पुरन्दरप्रयाणाऽनन्तरं, हरितां=दिशां, कमितारः=कामयितारः, दिक्पाला इत्याशयः, द्युतिपयःपितृनाथाः=अग्निवरुणयमाः, तम्=शक्रं, मुदा=हर्षेण, भैमीदर्शनाऽभिलाषजनितेनेति शेषः, अन्वयुः=अनुयाताः, (तथा हि) एकः परम्=एकजन एव, पुरः=प्रथमतः, वर्त्म=मार्गः, कर्षतु=करोतु, तद्गताऽनुगतिकः=तद्गमनाऽनुगमनकारी, महाऽर्घः=महामूल्यः, दुर्लभ इत्याशयः, न=नो भवतु, अग्रग एव दुर्लभस्तदनुसारिणः सुलभा इत्याशयः। अर्थान्तरन्यासाऽलङ्कारोऽत्र, स्वागता वृत्तम्।

**समासः**—द्युतिश्च पयश्च पितरश्च, तेषां नाथाः, द्युतिपयःपितृनाथा। तस्य (मार्गकर्तुः) गतं (गमनम्), तद्गते अनुगतिर्यस्य सः तद्गताऽनुगतिकः। महान् अर्घः (मूल्यम्) यस्य स महाऽर्घः।

(२३७) चित्रमत्र विबुधैरपि यत्तैःस्वर्विहाय बत! भूरनुसस्रे।
द्यौर्न काचिदथवाऽस्ति निरूढा, सैव सा चरति यत्र हि चित्तम् ॥ ५।५७॥

**प्रसङ्गः**—'चित्तं यत्र चरति, तत्रैव द्यौरस्ति' इति निगदन् अग्निवरुणयमपुरन्दरादीनां भूतलमागमनस्यौचित्यं प्रतिपादयति महाकविरत्र।

**अन्वयः**—विबुधैः अपि तैः यत् स्वः विहाय भूः अनुसस्रे, बत! अत्र चित्र? अथ वा सा द्यौः काचित् निरूढा न अस्ति। यत्र चित्तं चरति सा एव द्यौः हि।

**व्याख्या**—विबुधैः अपि=सुरैरपि, विद्वद्भिः अपि, तैः=शक्रादिभिः, यत् स्वः=स्वर्गं, विहाय=परित्यज्य, भूः=भूलोकः, अनुसस्रे=अनुसृता, बत=खेदे, अत्र=अस्मिन् विषये, चित्रम्=आश्चर्यम्? अथ वा=यद्वा, सा=प्रथिता, द्यौः=स्वर्गः, काचित्=काऽपि, निरूढा=प्रसिद्धा, न=नहि, अस्ति=विद्यते, यत्र=यस्यां, चित्तं=मानसं, चरति=रमते, सा एव, द्यौः=स्वर्गः, हि=निश्चयेन। अर्थान्तरन्यासालङ्कारोऽत्र, स्वागता वृत्तम्।

(२३८) कामनीयकमधःकृतकामं काममक्षिभिरवेक्ष्य तदीयम्।
कौशिकः स्वमखिलं परिपश्यन् मन्यते स्म खलु कौशिकमेव ॥ ५।६४॥

**प्रसङ्गः**—भैम्याः स्वयम्वर प्रति गच्छन्तं वर्त्मनि च सम्प्राप्तं नरपतिं नलमवेक्ष्य पुरन्दरः आत्मानमुलूकममन्यत—इति वर्णयति महाकविरत्र।

**अन्वयः**—कौशिकः अधःकृतकामं तदीयं कामनीयकं कामम् अक्षिभिः अवेक्ष्य अथ स्वम् अखिलं परिपश्यन् कौशिकम् एव मन्यते स्म खलु।

**व्याख्या**—कौशिकः=शक्रः, अधःकृतकामं=निरस्कृतमदनं, तदीयं=नलीयं, कामनीयकं=सौन्दर्यं, कामं=प्रकामम्, अक्षिभिः=लोचनैः, सहस्रसंख्यकैरिति शेषः, अवेक्ष्य=विलोक्य, अथ=अनन्तरं, स्वम्=आत्मानम्, अखिलम्=अशेषं यथा तथा, परिपश्यन्=विलोकयन्, कौशिकम् एव=उलूकम् एव, मन्यते स्म=अमन्यत, खलु=किल। स्वागता वृत्तमत्र।

समासः—अधः कृतः कामो येन, तत् अधःकृतकामम् । तस्य इदं, तत् तदीयं । कमनीयस्य भावः कामनीयकं, तत् कामनीयकम् ।

(२३९) मा धनानि कृपणः खलु जीवंस्तृष्णयाऽर्पयतु जातु परस्मै ।
तत्र नैष कुरुते मम चित्रं यत्तु नार्पयति तानि मृतोऽपि ।।
५।८९।।

प्रसङ्गः—नरपतिः नलः पुरन्दरं प्रति कृपणस्य स्वभावमत्र चारुतया समुपवर्णयति ।

अन्वयः—कृपणः जीवन् तृष्णया जातु परस्मै धनानि मा अर्पयतु, एष तत्र मम चित्रं न कुरुते (किन्तु) मृतः अपि तानि न अर्पयति (नार्पाणि कुरुते) ।

व्याख्या—कृपणः=कष्टलुब्धः, जीवन्=प्राणन्, तृष्णया=अतिलोभेन, जातु=कदाऽपि, परस्मै=अन्यस्मै याचमानाय, धनानि=द्रव्याणि, मा अर्पयतु=न ददातु, एषः=कृपणः, तत्र=तस्मिन्, जीवनाऽवसराऽनर्पणे, मम चित्रं =आश्चर्यं, न=नहि, कुरुते=विदधाति, (किन्तु) मृतः अपि=पञ्चत्वं गतोऽपि, तानि=धनानि, न अर्पयति=न ददाति, धनानि नृपसम्बन्धीनि कुरुते, तत्र चित्रं करोति । नार्पाणि नृपसम्बन्धीनि कुरुत इति तदाभासीकरणाद्विरोधाभासोऽलङ्कारोऽत्र । स्वागता वृत्तम् ।

समासः—नृपस्य इमानि नार्पाणि, नार्पाणि कुरुते इति नार्पयति ।

(२४०) दानपात्रमधमर्णमिहैकग्राहिकोटिगुणितं दिवि दायी ।
साधुरेति सुकृतैर्यदि कर्तुं पारलौकिककुसीदमसीदत् ।।५।९२।।

प्रसङ्गः—द्रष्टव्यम्, श्लो० २३९ ।

अन्वयः—साधुः इह एकग्राहि, दिवि कोटिगुणितं दायि दानपात्रम् (एव) अधमर्णः सुकृतैः एति यदि (तदा) असीदत् पारलौकिकं कुसीदं कर्तुम् (अलम्) ।

व्याख्या—साधु=सज्जनो वार्धुषिकश्च, इह=अस्मिन् संसारे, एकग्राहि =एकग्राहकं, दिवि=स्वर्गे, कोटिगुणितं=कोटिश आवृतं, दायि=दातृ, एतादृशं, दानपात्रम्=वितरणभाजनं, याचकमित्याशयः, तदेव, अधमर्ण=धनग्राहि, सुकृतैः=पुण्यैः, एति यदि=प्राप्नोति चेत्, तदा, असीदत्=अविनश्यत्, पारलौकिकं=परलोके भवं, कुसीदं=वृद्धिजीवनं कर्तुं=विधातुम्, अलम् इति शेषः । पर्याप्तम् इत्याशयः । स्वागता वृत्तम् ।

समासः—एकं गृह्णातीति एकग्राहि । कोटया गुणितं, तत् कोटिगुणितं । ददातीति, तत् दायि । दानस्य पात्रं, तत् दानपात्रम् । अधमम् ऋणं यस्य सः, तत् अधमर्णम् । परलोके भवं पारलौकिकम् ।

(२४१) आसते शतमधिक्षिति भूपास्तोयराशिरसि ते खलु कूपाः ।
किं ग्रहा दिवि न जाग्रति ते ते ! भास्वतस्तु कतमस्तुलयाऽऽस्ते ?।।
५।१००।।

प्रसङ्गः—पुरन्दरः स्वकार्यसंसाधनाय नरपतेः नलस्य प्रशंसामत्र विदधाति ।

अन्वयः—( हे नल ! ) अधिक्षिति शतं भूपा आसते, त्वं तोयराशिः असि, ते कूपाः खलु । ते ते ग्रहा दिवि न जाग्रति ? तु कतमो भास्वतः तुलया आस्ते ? ।

व्याख्या—( हे नल ! ) अधिक्षिति=पृथिव्यां, शतं=बहुसंख्यकाः, भूपाः महीपालाः, आसते=सन्ति, तत्र, त्वं ( नलः ) तोयराशिः=सागरः, असि= विद्यसे, ते=नरपतयः, कूपाः=उदपानानि, खलु=किल । ते ते ग्रहाः= चन्द्रादयः, दिवि=आकाशे, न जाग्रति=न प्रकाशन्ते किम् ? तु=किन्तु, कतमः=कः, ग्रहः, भास्वतः=सूर्यस्य, तुलया=साम्येन, आस्ते=विद्यते, न कोऽपीत्याशयः । दृष्टान्तालङ्कारोऽत्र, स्वागता वृत्तम् ।

समासः—क्षितौ इति अधिक्षिति । तोयानां राशिः, तोयराशिः ।

(२४२) तेन तेन वचसैव मघोनः स स्म वेद कपटं पटुरुच्चैः ।
आचरत्तदुचितामथ वाणीमार्जवं हि कुटिलेषु न नीतिः ।।
५।१०३।।

प्रसङ्गः—नरपतिः नलः पुरन्दरस्य सर्वां कुटिलतां विज्ञाय 'आर्जवं कुटिलेषु न नीतिः' इत्यनुसरन् यथोचितं समाचरितवानित्यस्य मनोरमं वर्णनं विदधाति-महाकविरत्र ।

अन्वयः—उच्चैः पटुः स तेन तेन वचसा एव मघोनः कपटं वेद स्म । अथ तदुचितां वाणीम् आचरत्, हि कुटिलेषु आर्जवं नीति न ।

व्याख्या—उच्चैः=अतितरां, पटुः=कुशलः, स=नलः, तेन तेन वचसा एव=पूर्वोक्तेन 'पाणिपीडनमहं' इत्यादिरूपेण वचनेन, एव, मघोनः=पुरन्दरस्य, कपटं=छलं, वेद स्म=विज्ञातवान्, अथ=शक्रकपटवेदनान्तरं, तदुचितां=पुरन्दरकपटाऽनुरूपां, वाणीम्=वाचम्, आचरत्=समाचरिवान्,

स्वयमपि कपटमकरोदित्याशयः। हि=यतः, कुटिलेषु=वक्रेषु जनेषु, आर्जवं= अकौटिल्यं, नीतिः=नयः, न=नहि, विद्यत इति शेषः। कुटिलेषु कुटिलेनैव भाव्यमित्याशयः। अर्थान्तरन्यासालङ्कारोऽत्र, स्वागता वृत्तम्।

समासः—तस्य उचिता, ताम् तदुचिताम्। ऋजोर्भावः, आर्जवम्।

(२४३) यां मनोरथमयीं हृदि कृत्वा यः श्वसिम्यथ कथं स तदग्रे।
भावगुप्तिमवलम्बितुमीशे! दुर्जया हि विषया विदुषाऽपि॥
५।१०९।

प्रसङ्गः—'यां भैमीं हृदये कृत्वाऽहं श्वसिमि, तदग्रे कामविकारगोपनं कथं विधास्यामी'ति पुरन्दरं प्रति निगदन् नरपतिः नलः 'विदुषाऽपि विषयाः दुर्जयाः' इति महाकवेर्सिद्धान्तमत्र द्रढयति।

अन्वयः—यः (अहम्) मनोरथमयीं यां हृदि कृत्वा श्वसिमि, अथ सः (अहम्) तदग्रे भावगुप्तिम् अवलम्बितुं कथम् ईशे? हि विदुषा अपि विषयाः दुर्जयाः।

व्याख्या—यः=अहं (नलः), मनोरथमयीं=सङ्कल्परूपां, हृदि= मानसे, कृत्वा=विधाय, श्वसिमि=प्राणिमि, अथ=अनन्तरं, सः=तादृशः अहं, तदग्रे=भैम्याः पुरः, भावगुप्तिं=मदनविकारगोपनं, अवलम्बितुं, कथं= केन प्रकारेण, ईशे=शक्नोमि, हि=यतः, विदुषा अपि=विवेकिनाऽपि, विषयाः=शब्दादयः, दुर्जयाः=जेतुमशक्याः। अर्थान्तरन्यासालङ्कारोऽत्र, स्वागता वृत्तम्।

समासः—तस्या अग्रे, तस्मिन् तदग्रे। भावानां गुप्तिः, ताम् भावगुप्तिम्। दुःखेन जेतुं शक्याः दुर्जयाः।

---

# अनिवार्य संस्कृत-गाइड

## आचार्य प्रथम खण्ड

( सभी प्रश्न-पत्र )

निर्धारित ग्रन्थ

| | |
|---|---|
| काव्यप्रकाशः १-३ उल्लास | ३५ अङ्क |
| न्यायसिद्धान्तमुक्तावली : शब्दखण्ड | १५ अङ्क |
| काव्यप्रकाशः ४-६ उल्लास | ५० अङ्क |
| काव्यप्रकाशः ७-८ उल्लास | ४० अङ्क |
| काव्यालङ्कारसूत्रम् तृतीय अधिकरण | १० अङ्क |
| काव्यप्रकाशः ९-१० उल्लास | ५० अङ्क |



चौखम्बा सुरभारती प्रकाशन
के. ३७/११७, गोपालमन्दिर लेन
पो० बा० नं० ११२९
वाराणसी २२१००१

मूल्य २७-००

## विविध परीक्षोपयोगी प्रश्नोत्तरात्मक ग्रन्थ

साहित्यदर्पणालोकः ( प्रश्नोत्तरात्मकः ) । श्री रामजी लाल शर्मा
काव्यप्रकाश-रहस्यम् ( प्रश्नोत्तरात्मकः ) । श्रीरामजी लाल शर्मा
चन्द्रालोक-रहस्यम् ( प्रश्नोत्तरात्मकः ) । मानवल्ली तथा वेताल
शिशुपालवध-रहस्यम् ( प्रश्नोत्तरात्मकः ) १–४सर्ग । अशोकचन्द्र गौड़
सांख्यकारिकार्थः ( प्रश्नोत्तरात्मकः ) । श्री राजेन्द्रप्रसाद कोठारी
अलङ्कारशास्त्रस्येतिहासः ( प्रश्नोत्तरात्मकः ) श्रीपरमेश्वरदीन पाण्डेय
नलचम्पू-रहस्यम् ( प्रश्नोत्तरात्मकः ) १–५उच्छ्वास । परमेश्वरदीनपाण्डेय
वेदान्तसार-प्रदीपः ( प्रश्नोत्तरात्मकः ) । श्री राजेन्द्रप्रसाद कोठारी
मध्यसिद्धान्तकौमुदी-चन्द्रिका ( प्रश्नोत्तरात्मकः ) विजयमित्र शास्त्री
मृच्छकटिक-सोपानम् ( प्रश्नोत्तरात्मकः ) । डॉ० नरेश झा
वेणीसंहार-रहस्यम् ( प्रश्नोत्तरात्मकः ) श्री परमेश्वरदीन पाण्डेय
नैषध-रहस्यम् ( प्रश्नोत्तरात्मकः ) १–५ सर्ग । श्री रमाशंकर मिश्र
दशरूपक-रहस्यम् ( प्रश्नोत्तरात्मकः ) श्री त्रिलोकीनाथ द्विवेदी
भट्टिकाव्य-दर्पणः । स्वामी प्रज्ञाभिक्षु १–४ सर्ग २५–०१, ५–८ सर्ग
भट्टिकाव्यालोकः डॉ० रमाशंकर मिश्र १४–१७सर्ग २५–०,१८–२२सर्ग
भारतीय-संस्कृतिः । लोकमणि दाहाल
संस्कृतभाषाविज्ञानम् । डॉ० शिवप्रसाद द्विवेदी
चन्द्रकलानाटिका-रहस्यम् ( प्रश्नोत्तरात्मकः ) श्रीपरमेश्वरदीन पाण्डेय
संस्कृतसाहित्येतिहासः ( प्रश्नोत्तरात्मकः ) । श्री परमानन्द शास्त्री
रसगङ्गाधर-हृदयम् । ( प्रश्नोत्तरात्मकः ) । श्री ज्ञानचन्द्र त्यागी
लघुसिद्धान्तकौमुदी-चन्द्रिका ( प्रश्नोत्तरात्मकः ) विजयमित्र शास्त्री
कादम्बरी-कलाप्रकाशः ( प्रश्नोत्तरात्मकः ) । डॉ० नरेश झा
लघुमञ्जूषारहस्यम् ( प्रश्नोत्तरात्मकः ) । स्वामी रामेश्वर पुरी
शाकुन्तलरहस्यम् ( प्रश्नोत्तरात्मकः ) । त्रिलोकीनाथ द्विवेदी
मेघदूत-तत्त्वालोकः ( प्रश्नोत्तरात्मकः ) डॉ० अशोकचन्द्र गौड़ शास्त्री
महाभाष्यनवाह्निकालोचनम् ( प्रश्नोत्तरात्मकः ) विजयमित्र शास्त्री
मुक्तावली-प्रकाशः ( न्यायसिद्धान्तमुक्तावली-प्रश्नोत्तरी ) ।
श्री राजेन्द्रप्रसाद कोठारी
औचित्यविचारचर्चा-मञ्जरी ( प्रश्नोत्तरात्मकः ) । डॉ० नरेश झा
वक्रोक्तिजीवितम् ( प्रश्नोत्तरात्मकः ) डॉ० नरेश झा
भारतीयसंस्कृति-सोपानम् ( प्रश्नोत्तरात्मकः ) डॉ० शिवप्रसाद द्विवेदी